# THE MITÁKSHARÁ:

A

COMPENDIUM OF HINDU LAW;

BY

# VIJŃÁNEŚWARA.

FOUNDED ON THE TEXTS

OF

# YÁJŃAWALKYA.

---

## THE VYÁVAHÁRA SECTION, OR JURISPRUDENCE.

---

EDITED BY

SRI LAKSHMI NÁRÁYAŃA

NYAYALANCÁRA.

AND

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE

OF

Public Instruction.

---

PRINTED AT THE EDUCATION PRESS.

1829.

# विज्ञानेश्वराचार्य्यसंगृहीतः

# मिताक्षराव्यवहाराध्यायः

---

श्रीयुतकमिङ्गसाहेबानुज्ञया

कलिकाताराजधान्यामिडुकेशन्मुद्रायन्त्रे

श्रीलक्ष्मीनारायणन्यायालङ्कारेण

शोधितोमुद्रितश्च

संवत् १८८६ ॥ शकाब्दाः १७५१ ॥

| प्रकरण | पृष्ठ | पङ्क्ति |
| --- | --- | --- |
| स्वयंदत्तपुत्रलक्षणम् | २०२ | १० |
| सहोढजपुत्रलक्षणम् | २०२ | १२ |
| अपविद्धपुत्रलक्षणम् | २०२ | १३ |
| पुत्राणां दायग्रहणे क्रमः | २०२ | १५ |
| पुत्रिकौरससमवाये | २०३ | २ |
| पूर्वपूर्वसत्त्वे उत्तरेषां चतुर्थांशित्वम् | २०३ | ५ |
| असवर्णानां ग्रासाच्छादनत्वम् | २०३ | ११ |
| क्षेत्रजस्य विशेषः | २०३ | २१ |
| तेषां दायाददायादबान्धवत्वम् | २०४ | ४ |
| दत्तकस्य जनकस्वक्थगोत्रनिवृत्तिः | २०४ | १३ |
| पूर्व्वपूर्व्वाभावे सर्व्वेषां पितृधनहारित्वम् | २०४ | १५ |
| भ्रातृपुत्रसत्त्वेऽन्यपुत्रो न कर्त्तव्यः | २०५ | ४ |
| तत्र तेषां नियमः | २०५ | ९ |
| शूद्रापुत्रस्थले | २०५ | १४ |
| शूद्रधनविभागे विशेषः | २०६ | २ |
| अथापुत्रधने दायादक्रमः | २०६ | १६ |
| प्रथमं पत्न्यधिकारः | २०७ | ७ |
| नियोगनिषेधः | २११ | ३ |
| द्विजातिधनस्य यज्ञार्थत्वे | २११ | १७ |

| प्रकरण | पृष्ठ | पङ्क्ति |
|---|---|---|

| प्रकरण | पृष्ठ | पङ्क्ति |
|---|---|---|
| पुरीषादिना द्विजं दुष्यन्दण्ड्यः | ३५२ | १४ |
| दम्भनाद्यभक्ष्यदूषणे | ३५३ | २ |
| विमांसविक्रयादौ अङ्गहीनता | ३५३ | ४ |
| अन्यायवर्त्तिहेमकारस्मृति | ३५३ | १२ |
| चतुःपादकृतमनुष्यमारणे | ३५३ | १५ |
| काष्ठशराद्युपक्षेपणे | ३५४ | ५ |
| छिन्ननस्ययानेन मारणे | ३५४ | ८ |
| तदुपेक्षायां स्वामिनो दण्डः | ३५५ | ३ |
| प्रवीणप्राजकत्वे | ३५५ | ८ |
| प्राणिविशेषाद्दण्डविशेषः | ३५५ | १२ |
| जारं चौरेति वदन्दण्ड्यः | ३५६ | ३ |
| राजनिन्दानिष्ठकरणे | ३५६ | ८ |
| राज्ञः कोषापहरणे वधः | ३५७ | १ |
| उपकरणानपहारे | ३५७ | ४ |
| ब्राह्मणस्य न शारीरदण्डः | ३५७ | ८ |
| मृतवस्तुविक्रेतृगुरुताडने | ३५७ | १४ |
| राजासनारोहे | ३५७ | १५ |
| परनेत्रद्वयभेदने ज्योतिर्विदा राजानिष्टादेशे | ३५८ | १ |

॥ इति द्वितीयाध्यायस्य सूची समाप्ता ॥

---

## मिताक्षरा

### व्यवहाराध्यायः

---

श्रीगणेशाय नमः। अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनम्परमो धर्म्मः। तच्च दुष्टनिग्रहमन्तरेण न सम्भवति। दुष्टपरिज्ञानञ्च न व्यवहारदर्शनम्बिनेति व्यवहारदर्शनमहरहः कर्त्तव्यमित्युक्तम्॥

व्यवहारान्स्वयम्पश्येत्सभ्यैः परिवृतोन्वहमिति॥

सच व्यवहारः कीदृशः कतिविधः कथञ्चेतीति कर्त्तव्यता कलापो नाभिहितस्तदभिधानाय द्वितीयोध्यायः प्रारभ्यते॥

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह। धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्ज्जितः॥ १॥**

अन्यविरोधेन स्वात्मसम्बन्धितया कथनं व्यवहारः। यथा कश्चिदिदं क्षेत्रमस्मदीयमितिकथयति। अन्योपि तद्विरोधेन

मदीयमिति । तस्यानेकविधत्वं दर्शयति सकृवचनेन । नृप इति । न क्षत्रियमात्रस्यायं धर्म्मः किन्तु प्रजापालनेऽधिकृत स्यान्यस्यापीतिदर्शयति । पश्येदिति पूर्वोक्तस्यानुवादोधर्म्म विशेषविधानार्थः । विद्वद्भिर्व्वेदव्याकरणादिधर्म्मशास्त्राभिज्ञै र्ब्राह्मणैर्न्न क्षत्रियादिभिः सहेति तृतीयानिर्द्देशात्तेषामप्रा धान्यं सहयुक्तेऽप्रधानइतिस्मरणात्। अतस्तादर्शनेऽन्यथादर्शने च राज्ञोदोषोन ब्राह्मणानां ॥

यथाहमनुः। अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्ड यन्। अयशोमहदाप्नोति नरकञ्चैव पश्यतीति ॥ धर्म्मशास्त्रा नुसारेण नार्थशास्त्रानुसारेण। देशादिसमयधर्म्मस्यापि धर्म्म शास्त्राऽविरुद्धस्य धर्म्मशास्त्रविषयत्वान्न पृथगुपादानम् । यथाच वक्ष्यति॥ निजधर्म्माविरोधेन यस्तुसामयिकोभवेत् । सोपि यत्नेन संरक्ष्योधर्म्मोराज्ञा कृतश्च यइति ॥ क्रोधलोभ विवर्ज्जितइति । धर्म्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभ विवर्ज्जितइति वचनमादरार्थम्। क्रोधोऽमर्षः। लोभोलिप्सा तिशयः॥ १ ॥

किञ्च । श्रुताध्ययनसम्पन्नाः धर्म्मज्ञाः सत्य वादिनः। राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः ॥ २ ॥

तेन मीमांसाव्याकरणादिश्रवणेन वेदाध्ययनेन च

सम्पन्नः धर्म्मज्ञा धर्म्मशास्त्रज्ञाः । सत्यवादिनः सत्यवचन शीलाः। रिपौ मित्रेच ये समाः द्वेषरागादिरहिताः। एव भूताः सभासदः सभायां संसदि यथासीदन्ति उपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः। यद्यपि श्रुताध्ययन सम्पन्नाइत्यविशेषेणोक्तं तथापि ब्राह्मणाएव॥

यथाह कात्यायनः॥ सतु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलै र्द्विजोत्तमैः। धर्म्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति॥ तेच त्रयः कर्त्तव्याः बहुवचनस्यार्थवत्त्वात्॥

यस्मिन्देशे निषीदन्ति विप्रावेदविदस्त्रयइति मनुस्मरणाच्च॥

बृहस्पतिस्तु॥ सप्तपञ्च त्रयोवा सभासदोभवन्तीत्याह॥ लोकवेदज्ञधर्म्मज्ञाः सप्त पञ्च त्रयोपिवा। यत्रोपविष्टाविप्राः स्युः सा यज्ञसदृशी सभेति॥ नच ब्राह्मणैः सहेति पूर्व्वश्लोको क्तानां ब्राह्मणानां श्रुताध्ययनसम्पन्नाइत्यादिविशेषणमिति मन्तव्यम्। तृतीयाप्रथमान्तनिर्द्दिष्टानां विशेषणविशेष्यभावा सम्भवात्। विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च॥

तथाच कात्यायनेन ब्राह्मणानां सभासदाञ्च स्पष्टभेदो दर्शितः॥ सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षकोराजा स्वर्गे तिष्ठति धर्म्मतइति॥ तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथाकरोति तदाऽसौ निवारणीयोन्यथादोषः॥

उक्तञ्च कात्यायनेन। अन्यायेनापि तं यान्तं येऽनुयान्ति

सभासदः । तेपि तद्भागिनस्तस्माद्दोषभीरुः सतैर्नृपं दहति । अनियुक्तानाम्पुनरन्यथाभिधानेऽनभिधानेवा दोषोनतु रागाऽनिवारणे ॥

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापिनरोभवति किल्विषीति मनुस्मरणात् ॥ रिपौ मित्रे चेति चशब्दाल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्त्तव्यम् ॥

यथाह कात्यायनः ॥ कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिःस्यात्कतिपयैः कुलभूतैरधिष्ठितमिति ॥ व्यवहारान्नृपः पश्येदित्युक्तम् । तत्रानुकल्पमाह ॥२॥

अपश्यता कार्य्यवशाद्व्यवहारान्नृपेण तु । सभ्यैः सह नियोक्तव्योब्राह्मणः सर्व्वधर्म्मवित् ॥ ३ ॥

कार्य्यान्तरव्याकुलतया व्यवहारापश्यता नृपेण पूर्व्वोक्तैः सभ्यैः सह सर्व्वधर्म्मवित् सर्व्वान्धर्म्मान् शास्त्रोक्तान्सामयिकांश्च धर्म्मान् वेत्ति चित्ते विचारयतीति सर्व्वधर्म्मविद्ब्राह्मणोन क्षत्रियादिर्नियोक्तव्योव्यवहारदर्शने । तच्च कात्यायनोक्तगुणविशिष्टं कुर्य्यात् ॥

यथाह । दान्तं कुलीनमध्यस्थमनुद्वेगकरं स्थिरम् । परत्र

भीरुन्धर्मिष्ठमुद्युक्तं क्रोधवर्ज्जितमिति ॥ एवम्भूतब्राह्मणा भावे क्षत्रियं वैश्यंवा नियुञ्जीत न शूद्रम् ॥

यथाह कात्यायनः ॥ ब्राह्मणोयत्र न स्यात्तु क्षत्रियन्तत्र योजयेत । वैश्यंवा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेदिति ॥

नारदेनत्वयमेव मुख्योदर्शितः ॥ धर्मशास्त्रम्पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद्व्यवहाराननुक्रमादिति ॥ प्राड्विवाकमते स्थितः न स्वमते स्थितः । राजा चारचक्षुषा परसैन्यम्पश्यतीतिवक्तव्य चेयं यौगिकी संज्ञा। अर्थिप्रत्यर्थिनौपृच्छतीति प्राट् तयोर्वचनं विरुद्धाविरुद्धञ्च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः प्राट्चासौ विवाकश्चेति प्राड्विवाकः ॥

उक्तञ्च ॥ विवादानुगतम्पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततस्मृतइति ॥ ३ ॥

अपिच । रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः । सभ्याः पृथक्पृथग्दण्ड्याविवादाद्द्विगुणन्दमम् ॥ ४ ॥

पूर्व्वोक्ताः सभ्यारजसोनिरङ्कुशत्वेन तदभिभूता, रागात् स्नेहातिशयात् लोभात् लिप्सातिशयात् भयात् संत्रासात् स्मृत्यपेतं स्मृतिविरुद्धं आदिशब्दादाचारादपेतं कुर्व्वन्तः पृथक्

पृथगेकैकशो विवादाद्विवादपराजयनिमित्ताद्दमाद्विगुणन्दम न्दण्ड्याः न पुनर्विवादास्पदीभूताद्द्रव्यात्तथासति स्त्रीसंग्रह णादिषु दण्डाभावप्रसङ्गः। रागलोभभयानामुपादानं रागादिष्वेव द्विगुणादमोनाज्ञानमोहादिष्विति नियमार्थं॥

नच राजा सर्व्वस्येष्टे ब्राह्मणवर्ज्जमिति गौतमवचनात्॥ न ब्राह्मणादण्ड्या इतिमन्तव्यम्। तस्य प्रशंसार्थत्वात्॥

यत्तु षड्भिः परिहार्य्यो राज्ञावध्यश्चावध्यश्चादण्ड्यश्चा वहिःकार्य्यश्चापरिवाद्यश्चापरिहार्यश्चेति। तदपि सएव वहु श्रुतोभवति। लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराण कुशलस्तदपेचस्तद्वृत्तिरष्टाचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्म्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतइतिप्रति पादितवहुश्रुतविशयत्न ब्राह्मणमात्रविषयं॥ व्यवहारविषय माह॥ ४॥

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥ ५॥

धर्म्मशास्त्रसमाचारविरुद्धेन मार्गेण परेणाधर्षितोऽभि भूतोयद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति चेद्यदि तदावेद्यमानं व्यवहारपदमृतिशोत्तरसंशयहेतुपरामर्श

प्रमाणनिर्णयप्रयोजनात्मकोव्यवहारस्तस्य पदं विषयस्तस्य चेदं सामान्यलक्षणं ॥ स च द्विविधः। शङ्काभियोगस्तत्वाभियोगस्चेति ॥

यथाह नारदः। अभियोगस्तु विज्ञेयः शङ्कातत्वाभियोगतः। शङ्काऽसतान्तु संसर्गात्तत्वं होटाभिदर्शनादिति॥ होटा लोप्त्रं लिङ्गमितियावत्। तेन दर्शनं साक्षाद्दा दर्शनं होटाभिदर्शनन्तस्मात्। तत्वाभियोगोपि द्विविधः। प्रतिषेधात्मकोविध्यात्मकस्चेति। यथा भक्तोहिरण्यादिकं गृहीत्वा न प्रयच्छति। क्षेत्रादिकं ममापहरतीति वा॥

उक्तञ्च कात्यायनेन। न्याय्यं स्वन्नेच्छते कर्त्तुमन्याय्यं वा करोतियद्दति स पुनश्चाष्टादशधा भिद्यते॥

यथामनुः। तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः। सम्भूयच समुत्थानन्दत्तस्यानपकर्म्मच। वेतनस्यैव चादानं सम्बिदस्च व्यतिक्रमः॥ क्रयविक्रयानुषयोविवादः स्वामिपालयोः॥ सीमाविवादधर्म्मस्च पारुष्ये दण्डवाचिक। स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेवच। स्त्रीपुन्धर्म्मोविभागस्च द्यूतमाह्वयएवच। पदान्यष्टादशैतानि व्यवहारस्थिताविहेति॥ एतान्यपि साध्य भेदेन पुनर्वहुत्वङ्गतानि॥

यथाह नारदः। एषामेव प्रभेदोन्यः शतमष्टोत्तरम्भवेत्। क्रियाभेदान्मनुष्याणां शतशाखोनिगद्यतदति ॥ आवेदयति चेद्राज्ञे इत्यनेन स्वयमेवागत्यावेदयति न राजप्रेरितस्त त्पुरुषप्रेरितोवेति दर्शयति॥

यथा मनुः। नोत्पादयेत्स्वयं कार्य्यं राजा नाप्यस्य पूरुषः।
न च प्रापितमन्येन ग्रसेतार्थं कथञ्चनेति॥ परैरिति परैश्च
पराभ्याम्परैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारोभवतीति
दर्शयति॥

यत्पुनरेकस्य बहुभिः सार्द्धं स्वेषामेव जनस्य च। अना
देयोभवेद्वादोधर्म्मविद्भिरुदाहृत इति नारदवचनन्तद्भिन्नसाध्य
द्वयविषयम्। आवेदयति राज्ञ इत्यनेनैव राज्ञा पृष्टोविनीत
वेषश्चावेदयेत्। आवेदितश्च पुनस्तेन मुद्रादिना तत्प्रत्यर्थ्या
ह्वानमकल्यादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तं।
स्मृत्यन्तरे तु स्पष्टार्थमुक्तम्॥

यथा। काले कार्य्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितं। किं कार्य्यं
का च ते पीडा मा भैषीर्ब्रूहि मानव। केन कस्मिन्कदा कस्मात्पृच्छे
देवं सभागतं। एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह। विमृश्य
कार्य्यं न्याय्यं चेदाह्वानार्थमतः परं। मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं
वा समादिशेत्। अकल्यबालस्थविरविषमस्थक्रियाकुलान्।
कार्य्यातिपातिव्यसनि नृपकार्य्योत्सवाकुलान्। मत्तोन्मत्तप्रम
त्तार्त्तभृत्यान्नाह्वानयेन्नृपः। न हीनपक्षां युवतिं कुले जातां
प्रसूतिकां। सर्व्ववर्णोत्तमां कन्यां ताज्ञातिप्रभुकाः स्मृताः। तद
धीनकुटुम्बिन्यः स्वैरिण्योगणिकाश्च याः। निष्कुला याश्च पतिता
स्तासामाह्वानमिष्यते। कालं देशञ्च विज्ञाय कार्य्याणाञ्च बला
बलम्। अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः। ज्ञात्वाभियोगं

येपि स्युर्वने प्रव्रजितादयः। तानप्याह्वानयेद्राजा गुरुकार्य्येष्व
कोपयन्निति। आसेधव्यवस्थाप्यर्थसिद्धैव नारदेनोक्ता॥

वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तञ्च तद्वचः। आसेधयेद्विवा
दार्थी यावदाह्वानदर्शनम्। स्थानासेधः कालकृतः प्रवासा
त्कर्मणस्तथा। चतुर्विधः स्यादासेधोनासिद्धस्तं विलङ्घयेत्।
आसेधकाल आसिद्ध आसेधं योतिवर्त्तते। स विनेयोन्यथा
कुर्व्वन्नासेद्धा दण्डभाग्भवेत्। नदीसन्तारकान्तारदुर्द्देशोप
प्लवादिषु। आसिद्धस्तम्परासेधमुत्क्रामन्नापराप्नुयात्। निर्वेष्टु
कामो रोगार्त्तोयियक्षुर्व्यसने स्थितः। अभियुक्तस्तथान्येन राज
कार्य्योद्यतस्तथा। गवाम्प्रचारे गोपालाः शस्यावापे कृषी
वलाः। शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहइति। आसे
धोराजाज्ञयावरोधः। अकल्पादयः पुत्रादिकमन्यम्वा स्वस्था
ने प्रेषयिष्यन्ति। नच ते परार्थवादिनः॥

योन भ्राता नच पिता न पुत्रो ननियोगकृत्। परार्थवादी
दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्निति नारदवचनात्। प्रत्यर्थिनि
सन्निधापिते आवेदनपुरुषाणामन्यतमेनानीतेकिङ्कुर्य्यादित्यत आह॥५॥

**प्रत्यर्थिनोग्रतोलेख्यं यथावेदितमर्थिना। समा
मासतदर्द्धाहर्न्नामजात्यादिचिह्नितं॥ ६॥**

अर्थ्यतइत्यर्थः साध्यः। सोस्यास्तीत्यर्थी। तत्प्रतिपक्षः

प्रत्यर्थीनस्याग्रतः पुरतोलेख्यं लेखनीयं । यथा येन प्रकारेण पूर्व्वमावेदनकाले आवेदितस्तथा न पुनरन्यथा अन्यथा वादित्वेन भङ्गप्रसङ्गात् ॥

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतइति । आवेदनकालएवा र्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यतआह समा मासेत्यादि । सम्वत्सरमासपक्षतिथिवारदिनार्थिप्रत्यर्थिनाम ब्राह्मणादिजात्यादिचिह्नितम् । आदिशब्देन द्रव्यतत्संख्या स्थानवेलाक्षमालिङ्गादीनि गृह्यन्ते ॥

यथोक्तम् । अर्थवद्धर्मसंयुक्तम्परिपूर्णमनाकुलं । साध्य वद्वाचकपदं प्रकृतार्थानुबन्धि च । प्रसिद्धमविरुद्धञ्च निश्चितं साधनक्षमम् । सङ्क्षिप्तन्निखिलार्थञ्च देशकालाविरोधि च । वर्षर्त्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्या जात्याकारवयोयुतं । साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामच । परात्मपूर्व्वजानेकराजनामभिरङ्कितं । क्षमालिङ्गात्मपीडा वत्कथिताहर्तृदायकं । यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते इति । भाषा प्रतिज्ञा पक्षइति नार्थान्तरं । आवेदनसमये कार्य्यमात्रं लिखितं । प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यतइति विशेषः । सम्वत्सरविशेषणं यद्यपि सर्व्वव्यवहारेषु नोपयुज्यते । तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते ॥

आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरेति वचनात् । अर्थ

व्यवहारेपि एकस्मिन्वत्सरे यत्संख्याकं यद्द्रव्यं यतोयेन गृहीतं प्रत्यर्पितञ्चेति पुनरन्यस्मिन् वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितञ्चेति। वत्सरान्तरे गृहीतं प्रत्यर्पितञ्च नास्मिन्वत्सर इत्युपयुज्यते॥ एवम्मासाद्यपि योज्यं। देशस्थानादयः पुनः स्थावरेष्वेवोप युज्यन्ते॥

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च। जातिः संज्ञाधि वासश्च प्रमाणं क्षेत्रनाम च॥ पितृपैतामहञ्चैव पूर्व्वराजानु कीर्त्तनं। स्थावरेषु विवादेषु दशैतानि निवेशयेदिति स्मर णात्।· देशोमध्यदेशादिः। स्थानम्वाराणस्यादि। सन्निवेशस्त थैव पूर्व्वापरदिग्विभागपरिच्छिन्नसन्निविष्टोगृहक्षेत्रादिः। जातिरर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः। संज्ञाच देवदत्तादिः। अधिवासः समीपदेशनिवासी जनः। प्रमाणंनिवर्त्तनादि भूपरि माणं।. क्षेत्राणान्नाम शालिक्षेत्रं कृष्णभूमः पाण्डुभूमइति। पितुःपितामहस्यच नामार्थिप्रत्यर्थिनोः पूर्व्वेषान्त्रयाणां राज्ञां नामकीर्त्तनञ्चेति। समामासादीनां यस्मिन् व्यवहारे यावदुप युज्यते तत्र तावदुल्लेखनीयमिति तात्पर्य्यार्थः। एवम्पक्षलक्षणे स्थिते पक्षलक्षणरहितानाम्पक्षवदवभासमानानाम्पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ता। अन्यैस्तु स्पष्टार्थमुक्तम्॥

अप्रसिद्धं निराबाधं निरर्थं निःप्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्ज्जयेदिति। अप्रसिद्धं मदीयं शश विषाणं गृहीत्वा न प्रयच्छतीत्यादि।निराबाधं अस्मद्गृहप्रदीप प्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। निरर्थं अभिधेयरहितं कचटतपं जडदगबमित्यादि। निःप्रयोजनं यथायं देवदत्तो स्मद्गृहसन्निधौ सुस्वरमधीतइति। असाध्यं यथाहन्देवदत्तेन सभ्रूभङ्गमुपहसितइत्यादि। एतत्साधनासम्भवादसाध्यं अल्प कालत्वान्न साचिसम्भवो लिखितं दूरतोऽल्पत्वात् नदिव्यमित्या दि। विरुद्धं यथा मूकेन शप्तइत्यादि। पुरराज्ञादिविरुद्धंवा। राज्ञा विवर्ज्जितोयस्य यस्य पौरविरोधकृत्। राष्ट्रस्य वा सम स्तस्य प्रकृतीनान्तथैवच। अन्यंवा ये पुरग्राममहाजनविरो धकाः। अनादेयास्तु ते सर्व्वे व्यवहाराः प्रकीर्त्तिताइति। यत्त्व नेकपदसंकीर्णः पूर्व्वपक्षोनसिद्धतीति। तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते तदा न दोषः। मदीयमनेन हिरण्यं वासोरूपकादि वापहृतमित्येवंविधस्यादुष्टत्वात्। ऋणादानपदशङ्करे पक्षा भासइति चेत्तदपि न मदीयरूपका अनेन वृद्ध्या गृहीताः सुवर्णञ्चास्य हस्ते निक्षिप्तं मदीयं क्षेत्रमपहरतिचेत्यादीनां पक्षत्वमीष्यतएव। किन्तु क्रियाभेदात्क्रमेण व्यवहारो न युगप दित्येतावत्॥

यथाह कात्यायनः। बहुप्रतिज्ञं यत्कार्य्यं व्यवहारेषु निश्चितं। कामन्तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया। तस्मादने

कपदसङ्कीर्णः पूर्व्वपक्षोयुगपत्न सिद्धतीति तस्यार्थः। अर्थिग्रहणात्पुत्रपौत्रादीनां ग्रहणं तेषामेकार्थत्वात्। नियुक्तस्यापि नियोगेनैव तदेकार्थत्वाक्षेपात्॥

अर्थिना सन्नियुक्तोवा प्रत्यर्थिप्रहितोपि वा। योयस्यार्थ विवदते तयोर्ज्जयपराजयाविति स्मरणात्। नियुक्तजयपराजयौ मूलस्वामिनोरेव। एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा आवापोद्धारेण शोधितं पश्चात्पत्रे निवेशयेत्॥

पूर्व्वपक्षः स्वभावोक्तः प्राड्विवाकोभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधितमिति कात्यायनस्मरणात्। शोधनञ्च यावदुत्तरदर्शनं कर्त्तव्यं नातः परङ्कर्त्तव्यमन्यथानवस्था प्रसङ्गात्॥

अतएवनारदेनोक्तं। शोधयेत्पूर्व्ववादन्तु यावन्नोत्तरदर्शनम्। अवष्टब्धस्योत्तरेन निवृत्तं शोधनम्भवेत्। पूर्व्वपक्षमशोधयित्वैव यदोत्तरन्दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्व्वकं व्यवहारः प्रवर्त्तनीयोराज्ञेति। एवं शोधितपत्रारूढे पूर्व्वपक्षे किं कर्त्तव्यमित्यतआह॥

## श्रुतार्थस्योत्तरं लेख्यं पूर्व्वावेदकसन्निधौ॥

श्रुतोभाषार्थोयेन प्रत्यर्थिनासौ श्रुतार्थस्तस्योत्तरम्पूर्व्वपक्षा

दुत्तरञ्च भवतीति उत्तरं लेख्यं लेखनीयम्। पूर्व्वावेदकस्यार्थिनः समीपे उत्तरञ्च यत्पूर्व्वोक्तस्य निराकरणन्तदुच्यते। यथाह। पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्। अव्याख्यागम्यमित्येतदुत्तरन्तद्विदो विदुरिति। पक्षस्य व्यापकन्निराकरणसमर्थं। सारं न्याय्यं न्यायादनपेतं। असन्दिग्धं सन्देहरहितं। अनाकुलं पूर्व्वापराविरुद्धं। अव्याख्यागम्यं अप्रसिद्धपदप्रयोगेन दुश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा। अन्यदेशभाषाभिधानेन वा यद्व्याख्येयार्थंन भवति तत्तदुत्तरम्। तच्चतुर्व्विधं। सम्प्रतिपत्तिर्म्मिथ्या प्रत्यवस्कन्दनम्पूर्व्वन्यायश्चेति॥

यथाह कात्यायनः। सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनन्तथा। पूर्व्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधमिदति। तत्र सत्योत्तरं यथा रूपकशतम्मह्यन्धारयतीत्युक्ते सत्यन्धारयामीति॥

यथाह। साध्यस्य सत्यवचनम्प्रतिपत्तिरुदाहृतेति॥ मिथ्योत्तरन्तु नाहन्धारयामीति॥

तथाच कात्यायनः। अभियुक्तोभियोगस्य यदि कुर्य्यादपह्नवम्। मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतइति। तच्च मिथ्योत्तरञ्चतुर्विधम्। मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः। अजातश्चास्मि तत्कालइति मिथ्या चतुर्विधमिति। प्रत्यवस्कन्दनन्नाम सत्यं गृहीतम्प्रतिदत्तम्प्रतिग्रहलब्धमितिवा॥

यथाह नारदः। अर्थिना लेखितोयोर्थः प्रत्यर्थी यदि तन्तथा। प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतमिति। प्राङ्न्याधोत्तरन्तु। यत्राभियुक्तएवं ब्रूयादस्मिन्नर्थे अनेनाहमभियुक्तस्तु तत्र चायं व्यवहारमार्गेण पराजितइति॥

उक्तञ्च कात्यायनेन। आचारेणावसन्नोपि पुनर्लेखयते यदि। सोभिधेयोजितः पूर्व्वम्प्राङ्न्यायस्तु सउच्यतइति। एवमुत्तरलक्षणेस्थिते उत्तर लक्षणरहितानां उत्तरवद्वभासमानानामुत्तराभासत्वमर्थसिद्धं स्पष्टीकृतञ्च॥

स्मृत्यन्तरे। सन्दिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरम्भवेत्। यद्व्यस्तपदमव्यापि निगूढार्थन्तथाकुलं। व्याख्यागम्यमसारञ्च नोत्तरं स्वार्थसिद्धय इति। तत्र सन्दिग्धम्। सुवर्णशतमनेन गृहीतमिति उक्ते सत्यं गृहीतम्। सुवर्णशतम्माषशतञ्चेति प्रकृतादन्यत्। यथा सुवर्णशताद्यभियोगे पणशतन्धारयामीति। अत्यल्पं सुवर्णशताभियोगे पञ्चधारयामीति। अतिभूरिसुवर्णशताभियोगे द्विशतन्धारयामीति। पक्षैकदेशव्यापि हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतन्नान्यदिति व्यस्तपदम्। ऋणादानाभियोगे पदान्तरेणोत्तरम्। यथा सुवर्णशताभियोगे अनेनाहन्ताडितइति अव्यापि देशस्थानादिविशेषणाव्यापि। यथा मध्यदेशे वाराणस्याम्पूर्वस्यान्दिशि क्षेत्रमनेनापहृतमिति पूर्व्वपक्षे लिखिते क्षेत्रमपहृतमिति। निगूढार्थं यथा सुव

र्णशताभियोगे किमहमेतस्मै धारयामीत्यत्र ध्वनिना प्राड्विवाकः सभ्योवार्थीवान्यस्मै धारयतीति सूचयतीति निगूढार्थं। आकुलम्पूर्व्वापरविरुद्धम् यथा सुवर्णशताभियोगे हते सत्यं गृहीतन्नधारयामीति । व्याख्यागम्यं। दुश्लिष्टविभक्तिसमासाध्याहाराभिधानेन अन्यदेशभाषाभिधानेनवा । यथा सुवर्णशतविषये पितॄणामभियोगे गृहीतशतस्य वचनात्सुवर्णाना न्पितुर्न्नजानामीति। अत्र गृहीतशतस्य पितुर्व्वचनात्सुवर्णानां शतं गृहीतमिति न जानामीति असारम्। न्यायविरुद्धम्। यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमिति अभियोगे सत्यं वृद्धिर्दत्ता नमूलं गृहीतमिति। उत्तरमित्येकवचननिर्द्देशादुत्तराणां सङ्करोनिरस्तः ॥

यथाह कात्यायनः। पचैकदेशे यत्सत्यमेकदेशेच कारणं मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरमिति । अनुत्तरत्वेच कारणन्तेनैवोक्तं। नचैकस्मिन्विवादेतु क्रिया स्याद्वादिनोर्द्वयोः। नचार्थसिद्धिरुभयोर्नचैकत्र क्रियाद्वयमिति। मिथ्याकारणोत्तरयोः सङ्करेऽर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति।मिथ्या क्रियापूर्व्ववादे कारणे प्रतिवादिनीति स्मरणात्। तदुभयमेकस्मिन् व्यवहारे विरुद्धं। यथा सुवर्णशतं रूपकशतंचानेन गृहीतमित्यभियोगे सुवर्णं नगृहीतं रूपकशतं गृहीतं प्रतिदत्तञ्चेति कारणप्राङ्न्यायसङ्करेतु प्रत्यर्थिनएवक्रियाद्वयं। प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्द्दिशेत्क्रियामिति । यथा

सुवर्णं गृहीतंप्रतिदत्तं रूपके व्यवहारमार्गेण पराजितइति।
अत्र च प्राड्न्याये जयपत्रेण वा प्राड्न्यायदर्शिभिर्वा भावयि
तव्यम्। कारणोत्तरेतु साक्षिलेख्यादिभिर्भावयितव्यमिति
विरोधः। एवमुत्तरचतुष्टयसङ्करेपि द्रष्टव्यम्। यथानेन सुवर्णं
रूपकशतम्वस्त्राणिच गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं
प्रतिदत्तञ्च रूपकशतन्तु न गृहीतमस्मिन्विषये पूर्व्वन्यायेन परा
जितइति। एवञ्चतुस्सङ्करेपि। एतेषाञ्चानुत्तरत्वं यौगपद्येन।
तस्य तस्यांशस्य तेन तेन विनाशित्वं क्रमेणोत्तरत्वमेव। क्रम
स्त्वर्थिनः प्रत्यर्थिनः सभ्यानाञ्चेच्छया भवति यत्र पुनरुभयोः
सङ्करे यस्य प्रभूतार्थविषयत्वन्तत्क्रियोपादानेन पूर्व्वं व्यवहारः
प्रवर्त्तयितव्यः पश्चादल्पविषयोत्तरोपादानेन व्यवहारो
द्रष्टव्यः। यत्र च सम्प्रतिपत्तेरुत्तरान्तरस्य सङ्करस्तत्रोत्तरा
न्तरोपादानेन व्यवहारोद्रष्टव्यः। सम्प्रतिपत्तौ क्रियाभावात्॥
यथा हारीतेन। मिथ्योत्तरकारणञ्च स्यातामेकत्र चेदुभे।
सत्यञ्चापि सहान्येन तत्रग्राह्यं किमुत्तरमित्युक्त्वोक्तं॥
यत्प्रभूतार्थविषयं यत्रवास्यात्क्रियाफलं। उत्तरन्तत्र
तज्ज्ञेयमसङ्कीर्णमतोन्यथा। सङ्कीर्णम्भवतीतिशेषः। श्रेषापेक्षया
ऐच्छिकः क्रमोभवतीत्यर्थः। तत्र प्रभूतार्थे यथानेन सुवर्णं रूपक
शतम्वस्त्राणिच गृहीतानि इत्यभियोगे सत्यं सुवर्णं गृहीतं
रूपकशतञ्च न गृहीतम्वस्त्राणितु गृहीतानि प्रतिदत्तानिचेति
अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं

व्यवहारः प्रवर्त्तयितव्यः। पश्चाद्वस्त्रविषयोव्यवहारः। एव मिथ्याप्राङ्न्यायसङ्करे कारणप्राङ्न्यायसङ्करेच योजनीयम्। तथा तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतञ्च गृहीतन्त्वा त्त्वामि वस्त्राणितु न गृहीतानि गृहीतानि प्रतिदत्तानीतिवा। वस्त्रविषये पूर्व्वंपराजितइति चोत्तरे सम्प्रतिपत्तेर्भरिविषय त्वेपि तत्र क्रियाभावान्मिथ्योत्तरक्रियामादाय व्यवहारः प्रव र्त्तयितव्यः। यत्तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वं। यथा मृङ्गग्राहिकतया कश्चिदृदति इयङ्गौर्मदीया अमुक स्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति। अन्यस्तु मिथ्येतदेतत्प्र दर्शितकालात्पूर्व्वमेवास्मद्गृहे स्थिता ममगृहे जातावेतिवदति। इदन्तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरम्। नापि मिथ्यैव कारणोपन्यासात्। नापिकारणम् एकदेशस्याभ्युपगमाभावात् तस्मात्सकारणं मिथ्योत्तरमिदम्। अत्रच प्रतिवादिनःक्रिया॥ कारणे प्रतिवादिनीति वचनात्। ननु मिथ्याक्रिया पूर्व्ववाद इति वादिनः कस्मात्क्रिया न भवति। तस्य शुद्धमिथ्याविषय त्वात्। कारणेप्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषय न्नभवति नैतत्। सर्व्वस्यापि कारणोत्तरस्य मिथ्यासहचरित रूपत्वात् शुद्धकारणोत्तरस्याभावात्प्रसिद्धकारणोत्तरे प्रति ज्ञातार्थैकदेशस्याभ्युपगमेनैकदेशस्य मिथ्यात्वं यथा सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्तत्वात्। प्रकृतोदाह रणेतु प्रतिज्ञातार्थैकदेशस्याभ्युपगमोनास्तीति विशेषः॥

एतच्च हारीतेन स्पष्टमुक्तम्। मिथ्याकारणयोर्व्वापि ग्राह्यं कारणमुत्तरमिति यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वं यथा रूपकशतं धारयतीत्यभियोगे मिथ्यैतदस्मिन्नर्थे पूर्व्वमयं मया पराजित इति। अत्रापि प्रतिवादिन एव क्रिया॥ प्राङ्न्याय कारणोक्तौ तु प्रत्यर्थी निर्द्दिशेत्क्रियामिति वचनाच्छुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात्स्वप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणाद्वोत्तरत्वं। यदा तु कारणप्राङ्न्यायसङ्करः यथा शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चेति एतस्मिन्नेवार्थे प्राङ्न्यायेनायम्पराजित इति। तत्र प्रतिवादिनो यथारुचीति न क्वचिद्वादिप्रतिवादिनोरेकस्मिन् व्यवहारे क्रिया प्रसङ्ग इति निर्णयः। एवमुत्तरे पक्षे निवेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्द्देशं कः कुर्य्यादित्यपेक्षित आह॥ ६॥

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्॥ ७॥

तत उत्तरानन्तरमर्थी साध्यवान्सद्य एवानन्तरमेव लेखयेत्। प्रतिज्ञातः साध्यः सचासावर्थस्चेति प्रतिज्ञातार्थस्तस्य साधनं साध्यते ऽनेनेति साधनम्प्रमाणं। अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमितिगम्यते।

तयोत्तरञ्च विवेचयिष्यते। अर्थी प्रतिज्ञातार्थसाधनं लेखये-दिति वदता यस्य साध्यमस्ति सप्रतिज्ञातार्थसाधनं लेखये-दित्युक्तमतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्यै-वार्थी ज्ञातइति। सएव साधनं निर्दिशेत्कारणोत्तरेपि कारणस्यैव साध्यत्वात्। कारणवाद्येवार्थीति सएव लेखयेत्। मिथ्योत्तरेतु पूर्व्ववाद्येवार्थीति सएवसाधनं निर्दिशेत् तथार्थी लेखयेदिति वदतार्थ्येव लेखयेन्नान्यइत्युक्तम्। अतश्च सम्प्रत्यु-त्तरे साध्याभावेन भावोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावा-त्साधननिर्देशएव नास्तीति तावतैव व्यवहारः समाप्यतइति मन्यते॥

एतदेव हारीतेन स्पष्टमुक्तम्। प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्द्दिशेत्क्रियां। मिथ्योक्तौ पूर्व्ववादीतु प्रतिपत्तौ न साभवेदिति। ततः किमित्यत आह॥ ७॥

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा।

तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादि-लक्षणस्यसिद्धौ निवृत्तौ सिद्धिं साध्यस्य जयलक्षणामाप्नोति। अतोस्मात्प्रकारादन्यथा प्रकारान्तरे साधनासिद्धौ विपरीत साध्यस्य सिद्धिम्पराजयलक्षणां प्राप्नोतीति सम्बन्धः। एवं व्यवहारस्वरूपमभिधायोपसंहरति॥

चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥

व्यवहारान्नृपः पश्येदित्युक्तोव्यवहारः सोयमित्यश्चतुष्पा चतुरंशकल्पनया विवादेषु ऋणादानादिषूपदर्शितोवर्णितः । तत्र प्रत्यर्थिनोग्रतोलेख्यमिति भाषापादः प्रथमः । श्रुतार्थ स्योत्तरं लेख्यमित्युत्तरपादोद्वितीयः। ततोर्थी लेखयेत्सद्य इतिक्रियापादस्तृतीयः । तत्सिद्धौ सिद्धिमाप्नोतीति साध्य सिद्धिपाद श्चतुर्थः।

यथोक्तम् । परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यान्यायाद्व्यवस्थानं व्यवहारउदाहृतः । भाषोत्तरक्रिया साध्यसिद्धिभिः क्रमवृत्तिभिः। आक्षिप्तचतुरंशस्तु चतुष्पादभि धीयतइति । सम्प्रतिपत्युत्तरेतु साधनानिर्देशाद्भाषार्थस्या साध्यत्वाच न साध्यसिद्धिलक्षणः पादोस्तीति द्विपात्त्वमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यव हारपादत्वेनानभिधानात् व्यवहर्तृसम्बन्धाभावाच न व्यवहार पादत्वमिति स्थितम्। इतिव्यवहारमातृका ॥

एवं सर्व्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधाया धुना क्वचित् व्यवहारविशेषे कञ्चिद्विशेषं दर्शयितुमाह ॥८॥

अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तञ्च नान्येन नोक्तं विप्रकृतिन्नयेत् ॥ ९ ॥

अभियुज्यत इति अभियोगोऽपराधस्तमभियोगमनिस्तीर्य्या पह्नुत्यैनमभियोक्तारन्न प्रत्यभियोजयेदपराधेन न संयोजयेत् यद्यपि प्रत्यवस्कन्दनम्प्रत्यभियोगरूपन्तथापि स्वापराधपरिहारात्मकत्वान्नास्य प्रतिषेधस्य विषयः। अतः स्वाभियोगानुपदर्शनरूपस्य प्रत्यभियोगस्यायन्निषेधः। इदम्प्रत्यर्थिनमधिकृत्योक्तमर्थिन म्प्रत्याह। अभियुक्तञ्च नान्येनेति। अन्येनाभियुक्तमनिस्तीर्णाभियोगमर्थी नाभियोजयेत्। किञ्च उक्तमावेदनसमये यदुक्तन्तद्विप्रकृतिं विरुद्धभावन्न नयेन्न प्रापयेत्। एतदुक्तम्भवति यद्वस्तु येन रूपेणावेदनसमये निरूपितं तद्वस्तु तथैव भाषाकालेपि लेखनीयन्नान्यथेति। ननु प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिनेत्यत्रैवेदमुक्तम् किमर्थम्पुनरुच्यते नोक्तम्विप्रकृतिन्नयेदिति। उच्यते। यथावेदितमर्थिनेत्यनेनावेदनसमये यद्वस्तु निवेदितन्तदेव भाषासमयेपि लेखनीयमेकस्मिन्नपि पदेन वस्त्वन्तरमित्युक्तम्। यथानेन रूपकशतं वृद्ध्या गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये वस्त्रशतं वृद्ध्या गृहीतमिति न वक्तव्यम्। तथासति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति। नोक्तं विप्रकृतिं नयेदित्यनेनैकवस्तुत्वेपि पदान्तरगमनं निषिध्यते यथा रूपकशतं वृद्ध्या गृहीत्वा यन्न प्रयच्छतीति आदावावेदनसमयेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति।

तत्र वस्त्वन्तरगमननिषिद्धमिह तु पदान्तरगमनन्निषिध्यत इतिन पौनरुक्त्यम्। एतदेव स्पष्टीकृतन्नारदेन ॥

पूर्व्ववादम्परित्यज्य योन्यमालम्बते पुनः। पदसंक्रमणाज्ज्ञेयो हीनवादी स वैनरइति। हीनवादी दण्ड्योभवति न प्रकृतादर्थाद्धीयते। अतः प्रत्यर्थिनोर्थिनस्च प्रमादपरिहारार्थएवायमभियोगमनिस्तीर्य्येत्याद्युपदेशोन प्रकृतार्थसिध्यसिद्धिविषयः। अतएव वक्ष्यति। छलन्निरस्य भूतेन व्यवहारान्नयेन्नृपइति। एतच्चार्थव्यवहारे द्रष्टव्यम्। मन्युकृतेतु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयतएव॥

यथाह नारदः। सर्व्वेष्वर्थविवादेषु वाक्छलेनावसीदति। परस्त्रीभूम्यृणादाने शास्योप्यर्थान्न हीयतइति। अस्यार्थः। सर्व्वेष्वर्थविवादेषु न मन्युयुक्तेषु वाक्छले प्रमादाभिदानेपि नावसीदति न पराजीयते। न प्रकृतार्थाद्धीयतइत्यर्थः। अत्रोदाहरणम्परस्त्रीत्यादि। परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योपि यथा प्रकृतादप्यर्थान्न हीयते। एवं सर्व्वेष्वर्थ विवादेष्विति। अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधानेन प्रकृतादप्यर्थाद्धीयतइतिगम्यते। यथाहमनेन शिरसि पादेन ताडितइत्यावेदनसमये अभिधाय भाषाकाले हस्तेन ताडितइति वदन्नकेवलं दण्ड्यः पराजीयते च। अभियोगमनिस्तीर्य्य नैनम्प्रत्यभियोजयेदित्यस्यापवादमाह॥ ९॥

कुर्य्यात्प्रत्यभियोगञ्च कलहे साहसेषु च।

कलहे वाग्दण्डपारुष्यात्मके साहसेषु विषशस्त्रादि निमित्तप्राणव्यापादनादिषु। प्रत्यभियोगसम्भवे स्वाभियोग मनिस्तीर्य्याप्यभियोक्तारम्प्रत्यभियोजयेत्। मन्वत्रापि पूर्व्वपक्षा नुपमर्द्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञातान्तरत्वे युगपद्व्यवहारासम्भवः समानः। सत्यं। नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः। अपितु न्यूनदण्डप्राप्तयेऽधिकदण्डनिवृत्त येवा। तथाहि। अनेनाहन्ताडितः शप्तोवेत्यभियोगे पूर्व्वमह मनेन ताडितः शप्तोवेति प्रत्यभियोगेदण्डाल्पत्वं॥

यथा नारदः। पर्व्वमाक्षारयेद्यस्तु नियतं स्यात्सदोषभाक्। पश्चाद्यः सोप्यसत्कारी पूर्व्वेतु विनयोगुरुरिति। यदातु पुनर्युगपदुभयोस्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः। पारुष्ये साहसेवापि युगपत्सम्प्रवृत्तयोः। विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोरिति। एवंसति युगपद्व्यवहारप्रवृत्त्य सम्भवेपि कलहादौ प्रत्यभियोगोऽर्थवानृणादिषु तु निरर्थक एव। अर्थिप्रत्यर्थिनोर्व्विधिमुक्त्वा समभ्यस्य सभापतेः कर्त्तव्य माह॥

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये॥१०॥

उभयोरर्थिप्रत्यर्थिनोः सर्व्वेषु विवादेषु निर्णयस्य कार्य्यं कार्य्यनिर्णयः। आहिताग्न्यादिषु पाठात्कार्य्यशब्दस्य पूर्व्वनिपातः निर्णयस्य च कार्य्यं साधितधनदानन्दण्डदानञ्च तस्मिन् समर्थः प्रतिभूः प्रतिभवति तत्कार्य्ये तद्भवतीति प्रतिभूर्ग्राह्यः सभ्येन सभापतिना। तस्याभावे अर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्यास्तेभ्यश्च ताभ्यां प्रतिदिनं वेतनन्देयम्॥

यथाह कात्यायनः। अथ चेत्प्रतिभूर्नास्ति कार्य्ययोग्यस्तु वादिनः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनमिति। अर्थिप्रत्यर्थिनोर्निर्णयकार्य्ये सभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम्। किन्तन्निर्णयकार्य्यं यस्मिन् प्रतिभूर्ग्राह्य इत्यपेक्षित आह॥१०॥

### निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्। मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्॥११॥

अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनापह्नवे कृते यदा अर्थिना साक्ष्यादिभिर्भावितोऽङ्गीकारितः। प्रत्यर्थी तदा दद्याद्धनमपहृतमर्थिने राज्ञे च तत्सममपलापदण्डं। अथार्थी भावयितुन्न शक्नोति तदा स एव मिथ्याभियोगी जात इत्यभियोगादभियुक्तधनाद्द्विगुणं धनन्दद्याद्राज्ञे प्राड्न्याये प्रत्यवस्कन्दने

षेदमेव योजनीयम्। तत्रार्थ्यं वापह्नववादी प्रत्यर्थि वा भावितो
राज्ञे प्रकृतमाधितधनसमं दण्डं दद्यादथ प्रत्यर्थी प्राङ्न्याय
कारणं भावितुन्न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे
द्विगुणन्धनन्दद्यादर्थिने च प्रकृतन्धनं। संप्रतिपत्त्युत्तरे तु दण्डा
भाव एव। एतच्चर्णादानविषय एव। पदान्तरेषु तत्र तत्र
दण्डाभिधानादधनव्यवहारेष्वस्यासम्भवाच्च न सर्व्वविषयत्वं।
राज्ञाऽधमर्णिको दाप्य इत्यस्यर्णादानविषयत्वेपि तत्रैव विशेषं
वक्ष्यामः। एतदेव सर्व्वव्यवहारविषयत्वेनापि योजनीयम्।
कथमभियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्ता साक्ष्यादि
भिर्भावितोऽभियुक्तस्तदा तत्समन्तच प्रतिपदोक्तमेव चशब्दो
ऽवधारणे। धनन्दण्डन्दद्याद्राज्ञ इत्यनुवादः। अथाभियोक्ता
अभियोगम्भावयितुन्न शक्नोति तदा मिथ्याभियोगीति प्रतिप
दोक्तधनन्दण्डं द्विगुणन्दद्यादिति विधीयते। अत्रापि प्राङ्न्याये
प्रत्यवस्कन्दने च पूर्व्ववदेव योजनीयम्। ततोर्थी लेखयेत्सद्यः
प्रतिज्ञातार्थसाधनमिति वदतोत्तरपादलेखने कालप्रतीक्षणं
दर्शितम्। अत्रापवादमाह ॥ ११ ॥

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥

साहसं विषशस्त्रादिनिमित्तप्राणिव्यापादनादि। स्तेय

चौर्य्ये। पारुष्यमान्दण्डपारुष्यमच्यमाणलक्षणम्। गोर्दोग्ध्री अभिशापः पातकाभियोगः। अत्ययः प्राणधनातिपातस्त्विन्दंदैकवञ्चावादेकवचनं स्त्रियां कुलस्त्रियाम्। दास्याश्च कुलस्त्रियाश्चारित्रविवादे दास्यां स्वत्वविवादे वा विवादये दुत्तरन्दापयेत्सद्य एव। न कालप्रतिक्षणं कुर्य्यात्। अन्यत्र विवादान्तरेषु कालः उत्तरदानकालः। इच्छया अर्थि प्रत्यर्थिसभ्यसभापतीनां स्मृत उक्तः। दुष्टलक्षणमाह ॥१२॥

देशाद्देशान्तरं याति सृक्किणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च॥१३॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि॥१४॥
स्वभावाद्विकृतिङ्गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः॥१५॥

मनोवाक्कायकर्मभिः यः स्वभावादेव न भयादिनिमित्ता द्विकृतिम्विकारं याति गच्छति असौ अभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः। तान्विकृतिन्विभज्य दर्शयति। देशाद्देशान्तरं याति नकापिदवतिष्ठते। सृक्किणी ओष्ठपर्य्यन्तौ परिलेढि जिह्वाग्रेण घटयति इति कर्मणो विकृतिः। अस्य ललाटं

स्विद्यति स्वेदबिन्दुचितं भवति। परिशुष्यत् स्खलद्वाक्यः परिशुष्यन्मुखगतं स्खलद्रूपं वाक्यं यस्यासौ तथोक्तः। विरुद्धं पूर्वापरविरुद्धम्। बहु भाषते इति वाचो विकृतिः। परोक्तं वाक्यं प्रतिवचनदानेन न पूजयति चक्षुषा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम्। तथा ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृतिः। एतच्च दोषसम्भावनमात्रमुच्यते। न दोषनिश्चयाय स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य दुर्ज्ञानत्वात्। अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति। नहि मरिष्यतोऽरिष्टदर्शनेन मृतकार्यं कुर्वन्त्येवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः ॥ १५ ॥

किञ्च। सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च
निष्पतेत्। न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स
स्मृतः ॥ १६ ॥

सन्दिग्धमर्थमधमर्णेनानङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति। यश्च स्वयं सम्प्रतिपन्नसाधनेन वा साधितं याच्यमानो निष्पतेत्पलायेत यश्चाभियुक्तो वाहूतः सदसि न किञ्चिद्वदति सोऽपि हीनो

दण्ड्यश्च स्मृतइति सम्बध्यते। अभियोगेच साक्ष्येवा दुष्टः स परिकीर्त्तितइति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव माभूदिति दण्ड्यग्रहणम्। दण्ड्यश्चापि भाषोऽप्यर्थाद्धीयतइत्यर्थाद हीनत्वद्दर्शनादत्र तन्माभूदिति हीनग्रहणम्॥ अथ यत्र द्वावपि युगपद्धर्माधिकरणमाप्तौ भाषावादिनौ। तद्यथा कश्चित्प्रति ग्रहेण क्षेत्रं लब्ध्वा कश्चित्कालमुपभुज्येत कार्य्यवशात्तं कुटुम्बे देशान्तरङ्गतः। अन्योपि तदेव क्षेत्रमप्रतिग्रहेण लब्ध्वा कश्चि त्कालमुपभुज्य देशान्तरङ्गतः ततोद्वावपियुगपदागत्य मदीय मिदं क्षेत्रमिति परस्परं विवदमानौ धर्माधिकरणमाप्तौ तत्र कस्य सिद्धेत्याकाङ्क्षित आह॥ १६॥

साक्षिषूभयतः सत्सु साक्षिणः पूर्व्ववादिनः।
पूर्व्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः॥ १७॥

उभयतउभयोरपि वादिनोः साक्षिषु सम्भवत्सु साक्षिणः पूर्व्ववादिनः पूर्व्वस्मिन्काले मया गृहीतमुपभुक्तञ्चेति योवद त्यसौ पूर्व्ववादी न पुनर्यः पूर्व्वन्निवेदयति तस्य साक्षिणः प्रष्टव्या यदा त्वन्यएवं वदति सत्यमनेन पूर्व्वं गृहीतमुपभुक्त ञ्चेति। किन्तु राज्ञा इदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्य न्दत्तमन्यन वा प्रतिग्रहेण लब्ध्वा मह्यन्दत्तमिति तत्र पूर्व्व

पक्षोऽसाध्यतया अधरीभूतस्तस्मिन्पूर्व्वपक्षे ऽधरीभूते भवन्त्यु
त्तरवादिनः। उत्तरकालप्रतिगृहीतमुपभुक्तञ्चेति वादिनः
साक्षिणः प्रष्टव्या भवन्ति। इदमेव व्याख्यानं युक्ततरम्। मिथ्यो
त्तरे पूर्व्ववादिनः साक्षिणोभवन्ति। प्राङ्न्यायकारणोक्तौ पूर्व्व
पक्षे ऽधरीभूते उत्तरवादिनः साक्षिणोभवन्तीति व्याख्यानम
युक्तम्। अस्यार्थस्य ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधन
मित्यनेनोक्तत्वात्पुनरुक्तिप्रसंगात्। पूर्व्वव्याख्यानमेव स्पष्टीकृतन्ना
रदेन। मिथ्याक्रिया पूर्व्ववादे कारणे प्रतिवादिनः। प्राङ्न्याय
विधिसिद्धौ तु जयपत्रं क्रिया भवेदित्युक्त्वा द्वयोर्व्विवदतोरर्थे
द्वयोः सत्सु च साक्षिषु। पूर्व्वपक्षोभवेद्यस्य भवेयुस्तस्य साक्षिण
इति वदता। एतस्य सर्व्वव्यवहारविलक्षणत्वात्पृथगुपन्यासः
॥१७॥

अपि च। सपणश्चेद्विवादः स्यात्तत्र हीनन्तु
दापयेत्। दण्डञ्च स्वपणञ्चैव धनिने धनमेव
च॥१८॥

यदि विवादोव्यवहारः सपणः। पणनम्पणः तेन सह
वर्त्तत इति सपणः स्यात्तदा तत्र तस्मिन्सपणे व्यवहारे हीनं
पराजितम्पूर्व्वोक्तन्दण्डं स्वकृतञ्च पणं राज्ञेऽर्थिने च विवादा

स्वदीभूतश्चनन्दापयेद्राजा। यत्र पुनरेकः कोपावेशवशाद्य
द्यहमत्र पराजितोभवामि तदा पणशतन्दास्यामीति प्रति
जानीते अन्यस्तु न किञ्चित्प्रतिजानीते तत्रापि व्यवहारः प्रव
र्त्तते। तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदिहीयते तदा
सएव सपणन्दण्डन्दाप्यः। अन्यस्तु पराजितोदण्डन्दाप्योन
पणं सपणं चेति विशेषोपादानात्। यत्र लेकः शतमन्यस्तु
पञ्चाशतम्प्रतिजानीते तत्रापि पराजये स्वकृतमेवपणन्दाप्यौ।
सपणश्चेद्विवादःस्यादितिवदतापणरहितोपि विवादोदर्शित
इति॥ १८॥

किञ्च। छलन्निरस्य भूतेन व्यवहारान्नयेन्नृपः।
भूतमप्यनपन्यस्तं हीयते व्यवहारतः॥ १९॥

छलंप्रमादाभिहितन्निरस्य परित्यज्य भूतेन वस्तुतत्त्वानु
सरणेन व्यवहारान्नयेदन्तं नृपः। यस्माद्भूतमपि वस्तुतत्त्वमपि
अनुपन्यस्तमनभिहितं हीयते हानिमुपगच्छति व्यवहारतो
व्यवहारेण साक्ष्यादिभिः तस्माद्भूतानुसरणं कर्त्तव्यम्।
यथार्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा सभ्येन सभापतिना
यतितव्यं सामादिभिरुपायैस्तथा सति साक्ष्यादिनिरपेक्षेणैव
निर्णयोभवतीति अथ सर्व्वथापि। भूतानुसरणं न शक्यते कर्त्तु
न्तथासति साक्ष्यादिभिर्निर्णयः कार्य्य इत्यनुकल्पः यथोक्तं॥

भूतच्छलानुसारित्वादिगतिः समुदाहृता । भूतच्छलार्थयुक्तं यत्प्रमादाभिहितञ्छलमिति. तत्र भूतानुसारीव्यवहारोमुख्यः छलानुसारीत्वनुकल्पः साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्छलानुसरणं भवति कदाचिन्नभवति। साक्ष्यादीनां व्यभिचारस्यापि सम्भवात्। भूतमप्यनुपन्यस्तं हीयतेव्यवहारतरइत्येतदाहरणमाह ॥१९॥

निह्नुते लिखितन्नैकमेकदेशविभावितः। दाप्यः सर्व्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः॥२०॥

नैकमनेकं सुवर्णं रजतवस्त्रादि लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्व्वमेव निह्नुते अपजानीते तदार्थिनैकदेशे हिरण्ये साक्ष्यादिभिः प्रत्यर्थीभावितोङ्गीकारितः सर्व्वं रजताद्यर्थं पूर्व्वलिखितन्दाप्योर्थिने नृपेण न ग्राह्यस्त्वनिवेदितः पूर्व्वं भाषाकाले अनिवेदितः पश्चादर्थिनापूर्व्वं मया विस्मृतइति निवेद्यमानो न ग्राह्योनादर्त्तव्योनृपेण। एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनोमिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेपि सत्यवादित्वसम्भवात्। एवं तर्कापरनामसम्भावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनतः सर्व्वं दापनीयम् नृपेण इतिनिर्णयः। एवञ्च

तर्कं वाक्यानुसरणेन निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेपि व्यव हारदर्शिनां न दोषः तथाच ॥

गौतमेन्यायाधिगमे तर्कोभ्युपायस्तेनाभ्यूह्य यथास्थानङ्गमयेदित्युक्त्वा तस्माद्राजाचार्य्यावनिन्द्यावित्युपसंहरति । न चैकदेशविभावितोनुपादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते । एकदेशविभावितोनृपेण सर्व्वन्दाप्य इतिवचनात् ॥

यत्तु कात्यायनेनोक्तम् । अनेकार्थाभियोगेपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितन्धनमिति तत्पुत्रादिदेयपित्राद्यृणविषयम । तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति प्रतिवदन् । निह्नववादी न भवतीत्येकदेशविभावितोपि न कश्चिन्मिथ्यावादीति निह्नुते लिखितश्चैकमिति शास्त्रन्तत्र न प्रवर्त्तते । निह्नवाभावादपेक्षिततर्काभावाच्च । अनेकार्थाभियोगेपीति कात्यायनवचनं सामान्यविषयं विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्त्तते । ननु ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितं । ऊने वाभ्यधिके चार्थे प्रोक्ते साध्यन्नसिध्यतीतिवदता कात्यायनेन अनेकार्थाभियोगे साक्षिभिरेकदेशे विभाविते अधिकेवा भाविते साध्यं सर्व्वमेव नसिध्यतीत्युक्तं । तथा सत्येकदेश भाविते अभावितैकदेशसिद्धिः कुतस्त्यादुच्यते लिखितसर्व्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने च कृत्स्नमेव साध्यं न सिध्यतीति तस्यार्थस्तथापि निश्चितन्न सिध्यतीति

वचनात्पूर्व्ववत् संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव कृत्स्नं निरस्येति नियमात्। साहसादौ तु सकलसाध्यसाधनतयाप दिष्टैः साक्षिभिरेकदेशेपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव। तावतैव साहसादेः सिद्धत्वात्कात्यायनवचनाच्च॥

साध्यार्थांशेपि गदिते साक्षिभिः सकलम्भवेत्। स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यं परिकीर्त्तितं। ननु निह्नुते लिखितन्नैकमितीयं स्मृतिः तथानेकार्थाभियोगेपीतीयमपि स्मृतिरेव तत्रानयोः स्मृत्योः परस्परविरोधे सतीतरेतरबाधनादप्रामाण्यङ्कस्मान्न भवति विषयव्यवस्था किमित्याश्रीयत इत्यत आह॥ २०॥

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।

यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थास्थापनाद्यावुत्सर्गापवादादिलक्षणो न्यायो बलवा न्समर्थः। स च न्यायः कुतः प्रत्येतव्य इत्यत आह। व्यवहारत इति। व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादव गम्यते। अतश्च प्रकृतोदाहरणेपि विषयव्यवस्थैव युक्त एवमन्य त्रापि विषयव्यवस्थां विकल्पादिर्यथा सम्भवं योज्यं। एवं सर्व्वत्र प्रसक्तेऽपवादमाह॥

अर्थशास्त्रात्तु बलवद्धर्म्मशास्त्रमिति स्थितिः॥ २१॥

धर्मशास्त्रानुसारेणेत्यनेनैवोशनसाद्यर्थशास्त्रस्य निरस्त त्वाद्धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विव क्षितं । अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्म शास्त्रं बलवत्। इतिस्थितिर्मर्य्यादा। यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतोविशेषोनास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बल वदित्यभिप्रायः धर्मस्य चप्राधान्यं शास्त्रादौ दर्शितन्तस्माद्धर्म शास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाधएव। न विषय व्यवस्था नापि विकल्पः किमत्रोदाहरणं। न तावत्॥

गुरुम्वा बालवृद्धौवा ब्राह्मणम्वा बहुश्रुतं। आततायिन मायान्तं हन्यादेवाविचारयन्। नाततायिवधे दोषोहन्तु र्भवति कश्चन। प्रच्छन्नम्वा प्रकाशम्वा मन्युस्तं मन्युमृच्छति। तथा। आततायिनमायान्तमपि वेदान्तगं रणे। जिघांसन्त ञ्जिघांसीयान्न तेन ब्रह्महा भवेत् इत्याद्यर्थशास्त्रं॥

इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजं। कामतोब्राह्मण वधे निष्कृतिर्न विधीयतइत्यादि धर्मशास्त्रन्तयोर्विरोधे धर्म शास्त्रं बलवदितियुक्तम। अनयोरेकविषयत्वासम्भवेन विरो धाभावान्न बलाबलचिन्ता अवतरति। तथाहि। शस्त्रं द्विजातिभिर्ग्राह्यन्धर्मोयत्रोपरुध्यतइत्युपक्रम्यात्मनश्च परि त्राणे दक्षिणानाञ्च सङ्गरे। स्त्रीविप्राभ्युपपत्तौ च धर्मेण घ्नन्न दुष्यतीत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानाञ्च रक्षणे

युद्धे च स्त्रीब्राह्मणहिंसायाञ्च आततायिनमकूटशस्त्रेण घ्नन् नदण्डभागित्युक्ता तस्यार्थवादार्थमिदमुच्यते। गुरुम्वा बाल वृद्धौवेत्यादि । गुर्व्वादीनप्यवध्यानप्याततायिनोहन्यात् किमुतान्यानिति। वाशब्दश्रवणादपि वेदान्तगमित्यचाप्यपि शब्दस्य श्रवणान्न गुर्व्वादीनां वध्यत्वप्रतीतिः॥

नाततायिवधे दोषोन्यत्र गोब्राह्मणवधादितिसुमन्तु वच नाच। आचार्य्यञ्च प्रवक्तारम्पितरम्मातरंगुरुं। न हिंस्याद्ब्रा ह्मणान्गाश्च सर्व्वांश्चैव तपस्विन इतिमनुवचनाच। आचार्य्या दीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनं सार्थवन्नान्यथा हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । नात तायिवधे दोषोहन्तुर्भवति कश्चनेत्येतदपि ब्राह्मणादिव्यति रिक्तविषयमेव॥

यतोऽग्निदोगरदश्चैव शस्त्रपाणिर्द्धनापहः। क्षेत्रदार हरश्चैव षडेते आततायिनः॥तथा उद्यतासिविषाग्निश्च शापो द्यतकरस्तथा। आथर्व्वणेन हन्ता च पिशुनश्चापि राजनि। भार्य्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान् विजा नीयात्सर्व्वानेवाततायिनइतिसामान्येनाततायिनोदर्शिताः । अतश्च ब्राह्मणादयआततायिनआत्मादित्राणार्थं हिंसान भिसन्धिना निवार्य्यमाणाः प्रमादाद्यदि विपद्येरंस्तत्र लघ प्रायश्चित्तं राजदण्डाभावश्चेति निश्चयस्तस्मादन्यदिदोदा हरणं वक्तव्यम्॥

यदुच्यते हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्व्वरा यतः।
अतोयतेत तत्प्राप्तावित्यर्थशास्त्रं धर्म्मशास्त्रानुसारेण क्रोधलोभ
विवर्ज्जित इतिधर्म्मशास्त्रं। तयोः क्वचिद्विषये विरोधोभवति
यथा चतुस्पाद्व्यवहारे प्रवर्त्तमाने एकस्य जयेऽवधार्य्यमाणे
मित्रलब्धिर्भवति। न धर्म्मशास्त्रमनुसृतम्भवति। अन्यस्य जये
ऽवधार्य्यमाणे धर्म्मशास्त्रमनुसृतम्भवति। मित्रलब्धिर्विपरीता।
तत्रार्थशास्त्राद्धर्म्मशास्त्रं बलवदतएव धर्म्मार्थसन्निपातेऽर्थ
ग्राहिणएतदेवेति प्रायश्चित्तस्य गुरुत्वं॥

दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकम्प्रायश्चित्त
मपराम्रश्यते ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमित्युक्तम्।
किन्तत्साधनमित्यपेक्षिते आह॥ २१॥

प्रमाणं लिखितम्भुक्तिः साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते॥ २२॥

प्रमीयते परिच्छिद्यते अनेनेति प्रमाणम्। तच्च द्विविधम्।
मानुषन्दैविकञ्चेति तत्र मानुषं प्रमाणं त्रिविधं लिखितम्भुक्तिः
साक्षिणश्चेति। कीर्त्तितं महर्षिभिः। तत्र लिखितं द्विविधं
शासनं चीरकञ्चेति। शासनमुक्तलक्षणं। चीरकन्तु वक्ष्यमाण
लक्षणम्। भुक्तिरुपभोगः साक्षिणोवक्ष्यमाणस्वरूपप्रकाराः।

ननु लिखितस्य साक्षिणाञ्च शब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भा वाद्युक्तं प्रामाण्यम्भुक्तेस्तु कथम्प्रामाण्यम्। उच्यते। भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्तीत्यनुमानेऽर्थापत्तौ वान्तर्भवतीति प्रमाणेन एषां लिखितादीनान्त्रयाणामन्यतमस्याभावे दिव्यानां वक्ष्यमाणरूपभेदानामन्यतमञ्ज्ञातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते। मानुषाभावएव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते। दिव्यस्य स्वरूपप्राभाण्ययोरागमगम्यत्वात्। अतश्च यत्र परस्परविवादिनोर्युगपत्कर्माधिकरणप्राप्तयोरेकोमानुषीं क्रियामपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या॥

तथाच कात्यायनः। यद्येकोमानुषीं ब्रूयादन्योब्रूयात्तु दैविकीम्। मानुषीन्तत्र गृह्णीयान्नतु दैवीं क्रियां नृपइति। यत्रापि प्रधानैकदेशसाधनं मानुषं सम्भवति तत्रापि नदैवमाश्रयणीयम्। यथारूपकशतमनया वृद्ध्या गृहीतायं न प्रयच्छतीत्यभियोगापह्नवे ग्रहणे साक्षिणः सन्ति नो सङ्ख्यायां वृद्धिविशेषे वातोदिव्येन भावयामीत्युक्ते तत्रैकदेशविभावितन्यायेनापि सङ्ख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः॥

उक्तञ्च कात्यायनेन। यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी। सा ग्राह्या नतु पूर्णापि दैविकीं वदतां नृणामिति। यत्तु गूढसाहसिकानान्तु प्राप्तं दिव्यैः परीक्षणमिति। तदपि मानुषासम्भवकृतनियमार्थं॥

यदपि नारदेनोक्तमरण्ये निर्ज्जने रात्रावन्तर्व्वेश्मनि साहसे न्यासापह्नवने चैव दिव्या सम्भवति क्रियेति। तदपि मानुषासम्भवएव। तस्मान्मानुषाभावएव दिव्येन निर्णयइत्यौत्सर्गिकमस्य चापवादोदृश्यते॥

प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके। बलोद्भवेषु कार्य्येषु साक्षिणोदिव्यमेवचेति। तथा लेख्यादीनामपि क्वचिन्नियमोदृश्यते॥

यथा पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता। तस्यास्तु साधनं लेख्यन्न दिव्यं नच साक्षिणः। तथा द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया। भुक्तिरेवतु गुर्व्वी स्यान्न दिव्यं नच साक्षिणः। तथा दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति। विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति। द्यूते समाह्वये चैव विवादे समुपस्थिते। साक्षिणः साधनम्प्रोक्तं न दिव्यं नच लेख्यकमिति। उभयत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्व्वापरयोः कार्य्ययोः कस्य बलीयस्त्वमित्यतआह॥२२॥

सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया॥

ऋणादिकेषु सर्व्वेष्वर्थविवादेषूत्तरा क्रिया क्रियतइति क्रिया कार्य्ये बलवती उत्तरकार्य्ये साधिते तद्वादी विजयी

भवेत्। पूर्व्वकार्य्ये सिद्धेपि तद्वादी पराजीयते। तद्यथा कश्चि द्ग्रहणेन धारणं साधयति कश्चित्प्रतिदानेनाधारणं। ग्रहण प्रतिदानयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदान वादी जयति। तथा पूर्व्वं द्विकं शतं गृहीत्वा कालान्तरे त्रिकं शतमङ्गीकृतवांस्तत्रोभयत्र प्रमाणसद्भावेपि त्रिशतग्रहण स्बलवत्पश्चाद्भावित्वात्। पूर्व्वाबाधे नानुपपत्तेः॥

उक्तस्य। पूर्व्वाबाधेननोत्पत्तिरुत्तरस्य हि सेत्स्यतीति अस्या पवादमाह॥

## आधौ प्रतिग्रहे क्रीते पूर्व्वान्तु बलवत्तरा॥ २३॥

आध्यादिषु त्रिषु पूर्व्वमेव कार्य्यं बलवत्। तद्यथा। एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति। तत्र पूर्व्वस्यैव तद्भवति नोत्तरस्य। एवं प्रति ग्रहे क्रये च। नन्वाहितस्य तदानीमस्वत्वात्पुनराधानमेव न सम्भवति। एवन्दत्तस्य क्रीतस्य च दानक्रयौ नोपपद्येते। तस्मा दिदंवचनमनर्थकं। उच्यते। अस्वत्वेपि यदि मोहात्कश्चिल्लोभा द्वा पुनराधानादिकं करोति तत्र पूर्व्वं बलवदिति न्यायपूर्व्वक मेवेदम्वचनमित्यचोद्यं। भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्य न्दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्य्यान्तरमाह॥ २३॥

पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी। परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥

परेणासम्बन्धेन भुज्यमानामब्रुवन्धनं वा पश्यतः अब्रुवतः मदीयेयं भूस्त्वया न भोक्तव्येत्यप्रतिषेधतस्तस्याभूमेर्विंशति वार्षिकी अप्रतिरवविंशतिवर्षोपभोगनिमित्ता हानिर्भवति। धनस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः। नन्वेतदनुपपन्नं नह्य प्रतिषेधात्स्वत्वमपगच्छति। अप्रतिषेधस्य दानविक्रयादिवत्स्व त्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् नापि विंशति वर्षोपभोगात्स्वत्वं। उपभोगस्य सत्त्वेऽप्रमाणत्वात्प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्। रिक्थक्रयादिषु स्वत्वकारकहेतु ष्वपाठाच्च तथाहि॥

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्या धिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरित्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति न भोगं। नचेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वोत्पत्तिहेतुत्वम्प्रतिपादयतीति युक्तम् स्वत्वस्य स्वत्वहेतूनाञ्च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वा भावात्। एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते। गौतमवचनन्तु नियमार्थं॥

अपिच। अनागमन्तु यो भुङ्क्ते वहून्यब्दशतान्यपि। चौर दण्डेन तम्पापन्दण्डयेत्पृथिवीपतिरित्येतदनागमोपभोगस्य

च

स्वत्वहेतुत्वे विरुध्यते यथागागमन्तु योभुङ्क्ते इत्येतत्परोक्ष

भोगविषयं । पश्यतोऽब्रुवतइति प्रत्यक्षविषयमितिवक्तुं युक्तम् ।

आगमन्तु योभुङ्क्ते इत्यविशेषाभिधानात् ॥

नोपभोगे बलं कार्य्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषा

दीनामिति धर्म्मोव्यवस्थितइति कात्यायनवचनाच्च । आगमस्य

भोगेच हानिकारणाभावेन हानेरसम्भवात् । नचैतस्मात्त्र्यम्

आधिप्रतिग्रहक्रयेषु पूर्व्वस्याः क्रियायाः प्राबल्यापवादेन भूमि

विषये विंशतिवर्षोपभोगयुक्तायाः धनविषये दशवर्षोपभोग

युक्तायाः उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यतइति । यत

स्तेषूत्तरैव क्रिया तत्त्वतोनोपपद्यते । स्वयमेवत्र्याधेयन्देयं

विक्रेयञ्च भवति । नचाहितस्य दत्तस्य विक्रीतस्य वा स्वत्व

मस्ति । अस्वत्वस्य दाने प्रतिग्रहे च दण्डः स्मर्य्यते ॥

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति । उभौ तौ चौरव

च्छास्यौ दाप्यौ चोत्तमसाहसमिति । तथाध्यादीनान्त्रयाणा

मपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादोनोप

पद्यते । तस्माद्भूम्यादीनां हानिरनुपपन्नैव । नापिव्यवहार

हानिः ॥

अतउपेक्षां कुर्व्वतस्तस्य तूष्णीं भूतस्य तिष्ठतः काले विपन्ने

पूर्व्वोक्ते व्यवहारो न सिध्यतीति नारदेनोपेक्षालिङ्गाभावकृता

व्यवहारहानिरुक्ता नतु वस्त्वभावकृता ॥

तथा मनुनापि। अजडश्चेदपौगण्डो विषये चास्य भुज्यते। भग्नन्तद्व्यवहारेण भोक्ता तद्धनमर्हतीति व्यवहारतो भङ्गो दर्शितो न वस्तुतः। व्यवहारभङ्गश्चैव भोक्ता किल वदति। अजडोयमपौगण्डोऽबालोस्य सन्निधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तञ्च बहवः साक्षिणः सन्ति यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावन्तं कालमुदास्त इति तत्र तत्र चायमिदन्तरो भवति। एवमिदन्तरस्यापि वास्तवो व्यवहारो भवत्येव छलन्निरस्य भूतेन व्यवहारान्नयेन्नृप इति नियमात्। अथ मतं यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीमस्थातव्यमित्युपदिश्यत इति तच्च न स्मार्त्तकालाभुक्तेर्हानिशङ्काकारणत्वाभावात्तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात्। अथोच्यते विंशतिग्रहणमूर्द्धमत्रदोषोद्भावननिराकरणार्थं॥

यथाह कात्यायनः। भुक्तस्य सन्निधावर्थी यस्य लेख्येन भुज्यते विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्ज्जितमिति। तदपि न आध्यादिष्वपि विंशतेरूर्द्धं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादसम्भवात्॥

यथाह कात्यायनः। अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः। तेन लेख्येन तद्विद्भिर्लेख्यं दोषविवर्ज्जितं। तथा सीमाविवादे निर्णीते सीमापत्रं विधीयते। तस्य दोषाः प्रवक्तव्या

यावद्वर्षाणि विंशतिरिति । एतेन धनस्य दशवार्षिकीत्येतदपि प्रत्युक्तं । तस्मादस्य श्लोकस्यार्थो वक्तव्यः । उच्यते भूमेर्धनस्य च फलहानिरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः । तथाहि निराक्रोशं विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते तथापि फलानुसरणं न लभते । अप्रतिषेधलक्षणात्स्वापराधाद्दशाच्च वचनात् । परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव । पश्यत इति वचनात् । प्रत्यक्षभोगे च साक्रोशे अब्रुवत इति वचनात् विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते विंशतिपक्षणात् न तु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानिरनुपपन्नैव बाढन्तस्य स्वरूपाविनाशेन तथैवावस्थाने यथा तदुत्पन्नपूगपनसचूतादीनां यत्पुनस्तदुत्पन्नमुपभोगान्नष्टन्तच्च स्वरूपनाशादेव स्वत्वनाशे अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापन्दण्डयेत् पृथिवीपतिरित्यनेन वचनेन निष्क्रयरूपेण मपयिता चौरवत्तत्समद्रव्यदानप्राप्तं हानिर्विंशतिवार्षिकी इत्यपोद्यते । राजदण्डः पुनरस्यैव विंशतेरूर्ध्वमपि । अनागमोपभोगादपवादाभावाच्च । तस्मात्स्वाम्युपेक्षालक्षणस्वापराधाद्दशाच्च वचनाद्विंशतेरूर्ध्वमष्टम्फलन्न लभत इति स्थितम् । एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् । अस्यापवादमाह ॥ २४ ॥

आधिसीमोपनिक्षेपजडबालधनैर्विना। तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि॥ २५॥

आधिश्च सीमाच उपनिक्षेपश्च आधिसीमोपनिक्षेपाः। जडश्च बालश्च जडबालौ तयोर्द्धने आधिसीमोपनिक्षेपाश्च जडबालधनेच आधिसीमोपनिक्षेपजडबालधनानि तैर्विना उपनिक्षेपोनाम रूपसङ्ख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम्॥

यथाहनारदः। स्वन्द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः। निक्षेपोनाम तत्प्रोक्तं व्यवहारपदं बुधैरिति। उपनिधानमुपनिधिः। आध्यादिषु पश्यतोब्रुवतोपि भूमेर्विंशतेर्द्धनस्यच दशभ्योवर्षेभ्यऊर्द्धमप्युपचयहानिर्नभवति। पुरुषापराधस्य तथाविधस्याभावादुपेक्षाकारणस्य तत्र तत्र सम्भवात् तथाहि। आधेराधिलोपाधिकएव भोगइत्युपेक्षायामपि न पुरुषापराधः। सीमायाश्चिरकृततुषाङ्गारादिचिह्नैस्तुसाध्यत्वादुपेक्षासम्भवति। उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात्प्रतिषेधातिक्रमोपभोगे च सोदयफललाभादुपेक्षोपपत्तिः। जडबालयोर्जडत्वाद्बालत्वादुपेक्षायुक्तैव राज्ञोबहुकार्य्यव्याकुलत्वात्। स्त्रीणामज्ञानादप्रागल्भ्याच। श्रोत्रियस्याध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षायुक्तैव तस्मादाध्यादिषु सर्व्वत्रो

पेक्षाकारणसम्भवात्। समक्षभोगे निराक्रोशे च न कदाचि दपि फलहानिः। आध्यादिषु दण्डविशेषप्रतिपादनार्थमाह ॥ २५ ॥

आध्यादीनां विहर्त्तारन्धनिने दापयेद्धनम्।
दण्डञ्च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥

आध्यादीनां श्रोत्रियद्रव्यपर्य्यन्तानां चिरकालोपभोग बलेनापहर्त्ता तन्निवादास्पदीभूतन्द्रव्यं स्वामिने दापयेदित्य नुवादः। दण्डञ्च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापये दिति विधिः। यद्यपि गृहक्षेत्रादिषु तत्समोदण्डोन सम्भवति तथापि मर्य्यादायाः प्रभेदे च सीमातिक्रमणे तथेत्यादिना वक्ष्यमाणोदण्डोद्रष्टव्यः अथ 'तत्समदण्डेन अपहर्त्तुर्दमनञ्च भवति वऊधनत्वेन। तदा शक्त्यपेक्षन्धनन्दापयेत्। यावता तस्य दर्पोपसमोभवति तावद्दापयेत्॥

दण्डोदमनादित्याऊस्तेनादान्तान्दमयेदिति दण्डपद पस्य दमनार्थत्वात्। यस्य तु तत्सममपि द्रव्यन्नास्ति सोपि यावता पीड्यते तावद्दाप्यः। यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना दमनीयः॥

तथाह मनुः। धिग्दण्डं प्रथमं कुर्य्याद्वाग्दण्डन्त

हनन्तरम्। तृतीयश्चनदण्डश्च बधदण्डमतः परमिति। बध दण्डोपि शारीरोशारीरश्चव्यतिरिक्तानान्दशधा दर्शितः॥

यथाह मनुः दशस्थानानि दण्डस्य मनुः स्वायम्भुवोब्रवीत्। त्रिषु वर्णेषु यानिस्युरचतो ब्राह्मणोब्रजेत्। उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्। चक्षुर्नासा च कर्णौ च धनन्देहस्तथैव चेति। एतेषां यन्निमित्तोपराधस्तन्नैवोपस्थादौ नियहः कार्य्य इति द्रष्टव्यम्। कर्म्म वा कारयितव्योबन्धनागारम्वा प्रवेशयितव्यः। यथोक्तम् कात्यायनेन। धनदानासहं बुध्वा स्वाधीनं कर्म्मकारयेत्। अशक्तौ बन्धनागारप्रवेशोब्राह्मणाहतइति ब्राह्मणस्य पुनर्द्रव्याभावे कर्म्मवियोगादीनि प्रयोज्यानि॥

तथाह गौतमः। कर्म्मवियोगविख्यापननिर्व्वासनाङ्ककरणा दीन्यप्रवृत्ताविति॥

नारदेनापि। बधः सर्व्वस्वहरणं पुरान्निर्व्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्डउत्तमसाहसः अविशेषेण सर्व्वेषामेव दण्डविधिः स्मृतइत्युक्तोक्तम्॥

बधाहृते ब्राह्मणस्य नबधं ब्राह्मणोर्हति। शिरसोमुण्डनं दण्डस्तस्य निर्व्वासनम्पुरात्। ललाटे वाभिशस्ताङ्कः प्रयाणङ्गर्द्दभेन चेति। अङ्कने च व्यवस्था दर्शिता॥

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः। स्तेये तु श्वपदं कुर्य्याद्ब्रह्महन्यशिराः पुमानिति यत्त चक्षुर्निरोधोब्राह्मणस्येत्यापस्तम्बवचनम्। ब्राह्मणस्य पुरान्निर्व्वासनसमये वस्त्रादिना

चक्षुर्निरोधः कर्त्तव्य इति तस्यार्थेन चक्षुर्मोहङ्करणम्। अथतो-
ऽश्वमेधाश्वमेधेत् नश्यारीरोऽग्राह्यत्वे इच्छ इत्यादि मनुगौत
मादिवचनविरोधादित्यलमतिप्रसङ्गेन। स्वत्वाव्यभिचारित्वेन
भोगस्य स्वत्वे प्रमाणत्वमुक्तम्। भोगमात्रस्य स्वत्वव्यभिचारि
त्वात्कीदृशोभोगः प्रमाणमित्यत आह ॥ २९ ॥

## आगमोभ्यधिकोभोगाद्विनापूर्व्वक्रमागतात्।

स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः। स भोगाभ्यधिकोबलीः
यान् स्वत्वबोधने भोगस्यागमसापेक्षत्वात्॥

यथाह नारदः। आगमेन विशुद्धेन भोगोयाति प्रमाण
ताम्। अविशुद्धागमोभोगः प्रामाण्यं नैव गच्छतीति। नच
भोगमात्रात्स्वत्वावगमः परकीयस्याप्यपहारादिनोपभोग
सम्भवात्। अतएव॥

भोगङ्केवलतोयस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलोप
देशेन विज्ञेयः स तु तस्कर इति स्मर्य्यते। अतश्च सागमोदीर्घ
कालोनिरन्तरोनिराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषण
युक्तोभोगः प्रमाणमित्युक्तम्भवति। तथाच स्मर्य्यते॥

सागमोदीर्घकालश्चाविच्छेदोपरवोज्झितः। प्रत्यर्थि
सन्निधानश्च परिभोगोपि पञ्चधेति। क्वचिच्चागमनिरपेक्षस्यापि

प्रामाण्यमित्याह। विनापूर्व्वक्रमागतादिति पूर्व्वेषां पित्रादीनां त्रयाणां क्रमः पूर्व्वक्रमस्तेनागतोयोभोगस्तस्मादिना आगमो ऽधिकइति सम्बन्धः सपुनरागमाद्भ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः। तत्राप्यागमज्ञाननिरपेक्षेण सन्तानिरपेक्षः सन्तात् तेनैवावगम्यतइति बोद्धव्यं। विनापूर्व्वक्रमागतादित्येत त्स्मार्त्तकालप्रदर्शनार्थं। आगमोऽधिकोभोगादिति च स्मार्त्तकालविषयम्। अतश्च स्मरणयोग्ये काले योग्यानुप लब्ध्यागमाभावनिश्चयसम्भवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम्। स्मार्त्ते तु काले योग्यानुपलब्ध्याभावेनागमाभाव निश्चयासम्भवादागमज्ञाननिरपेक्षएव सन्ततोभोगः प्रमाणं। एतदेव स्पष्टीकृतङ्कात्यायनेन। स्मार्त्त काले क्रिया भूमेः सागमा भुक्तिरिष्यते। अस्मार्त्तेऽनुगमाभावात् क्रमात्त्रिपुरुषा गता। स्मार्त्तश्च कालोवर्षशतपर्य्यन्तः शतायुर्वै पुरुषइति श्रुतेः। अनुगमाभावादिति योग्यानुपलब्ध्याभावेनागमाभाव निश्चयाभावादिति अतश्च वर्षशताधिकभोगः सन्ततोऽप्रति रवः प्रत्यर्थिप्रत्यक्षश्चागमाभावे चानिश्चिते अव्यभिचारादा चिप्तागमः स्वलं गमयति। अस्मार्त्तेऽपि काले अनागमस्मृति परम्परायां सत्याञ्च भोगः प्रमाणम्॥

अतएव अनागमन्तु योभुङ्क्ते वहून्यब्दशतान्यपि। चौर दण्डेन तम्पापन्दण्डयेत्पृथिवीपतिरित्युक्तम्। नचानाग

मन्तु योभुङ्क्त इत्येकवचननिर्द्देशाद्बहून्यब्दशतान्यपीत्यपिशब्द
प्रयोगात्प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्ड
विधानमिति मन्तव्यं । द्वितीये तृतीये वा पुरुष निरागमस्य
भोगस्य प्रामाण्यप्रसङ्गान्न चैतदिष्यते। आद्ये तु कारणन्दानं
मध्ये भुक्तिस्तु सागमेति नारदस्मरणात् । तस्मात्सर्व्वत्र निरा
गमोपभोगेऽनागमन्तु यो भुङ्क्त इत्येतद्द्रष्टव्यम् ॥

यद्यप्यन्यायेनापि यद्भुक्तं पित्रा पूर्व्वतरैस्त्रिभिः । न तच्छक्य
मपाहर्त्तुं क्रमात्त्रिपुरुषागतमिति। पित्रा सह पूर्व्वतरैस्त्रिभि
रिति योज्यं । तत्रापि क्रमात्त्रिपुरुषागतमित्यस्मार्त्तकालोप
लक्षणम्। त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयाति
क्रमसम्भवाद्द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्ग
स्तथा सति स्मार्त्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यत इति
स्मृतिविरोधः। अन्यायेनापि यद्भुक्तमित्येतच्चान्यायेनापि भुक्त
मपहर्त्तुन्न शक्यं किम्पुनरन्यायानिश्चय इति व्याख्येयमपिशब्द
श्रवणात् ॥

यच्चोक्तम् । यद्विनागममत्यन्तम्भुक्तं पूर्व्वैस्त्रिभिर्भवेत्। न
तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतमिति। तत्राप्यत्यन्तमा
गमं विनेत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयं। न पुन
रागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि
न स्वत्वं भवतीत्युक्तं क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थं । ननु
स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नं।

तथाहि । यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यं। अथ प्रमाणान्तरेणागमोनावगतः कथन्तद्विशिष्टोभोगः प्रमाणं। उच्यते। प्रमाणान्तरेणावगतागमसहितएव निरन्तरोभोगः कालान्तरे स्वत्वङ्गमयति। अवगतोप्यागमोभोगरहितोन कालान्तरे स्वत्वङ्गमयितुमलं मध्ये दानविक्रयादिना स्वत्वापगमसम्भवादिति सर्व्वमनवद्यं। आगमसापेक्षोभोगः प्रमाणमित्युक्तम्। आगमस्तर्हि भोगनिरपेक्षएव प्रमाणमित्यतआह॥

आगमेऽपि बलं नैव भुक्तिस्तोकापि यत्र नो॥ २७॥

यस्मिन्नागमे स्वल्पापि भुक्तिर्नो नास्ति तस्मिन्नागमे बलं सम्पूर्णं नैवास्ति । अयमभिसन्धिः स्वत्वनिवृत्तिः परस्वत्वापादनञ्च दानं। परस्वत्वापादनञ्च परोयदिस्वीकरोति तदा सम्पद्यते। नान्यथा। स्वीकारस्त्रिविधोमानसोवाचिकः कायिकश्चेति। तत्र मानसोममेदमिति सङ्कल्परूपः। वाचिकस्तु ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः। कायिकः पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः तत्र च नियमः स्मर्य्यते॥

दद्यात्कृष्णाजिनम्पुच्छे गां पुच्छे करिणाङ्करे। केशरेषु तथैवाश्वन्दासीं शिरसि दापयेदिति॥

आश्वलायनोप्याह। अनुमन्त्रयेत्प्राणभिस्पृशेद्प्राणिकन्या चेति। तत्र हिरण्यवस्त्रादावुदकदानान्तरमेवोपादानाहि सम्भवात्। त्रिविधोपि स्वीकारः सम्पद्यते क्षेत्रादौ पुनः फलोप भोगव्यतिरेकेण कायिकस्वीकारासम्भवात्। स्वल्पेनाप्युप भोगेन भवितव्यम्। अन्यथा दानक्रयादेः सम्पूर्णता न भव तीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमोदुर्बलो भवति तत्सहितादागमाभावात्। एतच्च द्वयोः पूर्वापरकाला परिज्ञाने। पूर्वापरकालज्ञानेतु त्रिगुणोपि पूर्वकालागम एव बलीयानिति। अथवा लिखितं साक्षिणोभुक्तिः प्रमाणं त्रिविधं स्मृतमित्युक्तम्। एतेषां समवाये कुत्र कस्य प्राबल्यमित्यत्रे दमुपतिष्ठते॥

आगमोभ्यधिकोभोगाद्विनापूर्वक्रमागतात्। आगमेऽपि बलन्नैव भुक्तिः स्तोकापि यत्र नो। इति अयमर्थः। आद्ये पुरुषे साक्षिभिर्भावितआगमोभोगादभ्यधिकोबलवान्पूर्व क्रमागताद्भोगाद्विना। स पुनः पूर्वक्रमागतोभोगस्तुतुर्ये पुरुषे लिखितेन भावितादागमाद्बलवान् मध्यमेतु भोगरहिता दागमात् स्तोकभोगरहितोप्यागमोबलवानिति॥

एतदेव नारदेन स्पष्टीकृतं आदौ तु कारणन्दानं मध्ये भुक्तिस्तु सागमा। कारणं भुक्तिरेवैका सन्तता या चिरन्त नीति। पश्यतो ब्रुवतइत्यत्र विंशतिवर्षभोगादूर्द्ध्वं भूमेर्द्धनस्यापि दशवर्षभोगादूर्द्ध्वं फलानुसरणं न भवतीत्युक्तं। तत्र फलानु

परस्ववहस्थानुसरणमपि न भविष्यतीत्यास्य पुरुषव्यवस्थया प्रमाणव्यवस्थया च दण्डव्यवस्थान्दर्शयितुमाह ॥ २७ ॥

आगमस्तु कृतोयेन सोभियुक्तस्तमुद्धरेत् । न तत्सुतस्तत्सुतोवा भुक्तिस्तत्र गरीयसी ॥ २८ ॥

येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः । स पुरुषः कुतस्ते चेत्रादिकमित्यभियुक्तस्तमागमम्प्रतिग्रहादिकं लिखितादिभिरुद्धरेत् भावयेदनेन चाद्यपुरुषस्यागममनुद्धरतो दण्ड इत्युक्तम् भवति तत्सुतो द्वितीयोभियुक्तो नागममुद्धरेत् । किन्तु अविच्छिन्नाप्रतिरवसमचभोगमनेन चागममनुद्धरतो द्वितीयस्य न दण्डोऽपि किन्तु विशिष्टभोगमनुद्धरतो दण्ड इति प्रतिपादितं तत्सुतस्तृतीयो नागमन्नापि विशिष्टभोगमुद्धरेदपितु क्रमागतभोगमात्रम् । अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणेऽपीत्यभिहितम् । तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी । तत्रापि द्वितीये गुरुः तृतीये गरीयसीति विवेक्तव्यम् । त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव दण्डेतु विशेष इति तात्पर्य्यार्थः । उक्तञ्च । आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतोवा भोगहानिस्तयोरपि ॥

अस्मार्त्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्त मिनापूर्व्वक्रमागतादित्यत्र तस्यापवादमाह ॥ २८ ॥

योभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणम्भुक्तिरागमेन विना कृता ॥ २९ ॥

यदा पुनराहर्त्तादिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतः स्यात्परलोकगतोभवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत् यस्मात्तत्र तस्मिन् व्यवहारे भुक्तिरागमरहिता साक्ष्यादिभिः साधितापि न प्रमाणं । पूर्व्वाभियोगेन भोगस्य सापवादत्वात् ॥

नारदेनाप्युक्तम् । तथारूढविवादस्य प्रेतस्य व्यवहारिणः । पुत्रेण सोर्थः संशोध्योन तद्भोगोनिवर्त्तयेदिति । अनिर्णीतव्यवहारे व्यवहर्त्तरि प्रेते व्यवहारोन निवर्त्ततइति स्थितं निर्णीतेऽपि व्यवहारे स्थिते च व्यवहर्त्तरि व्यवहारः क्वचित्प्रवर्त्तते क्वचिन्न प्रवर्त्ततइति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह ॥ २९ ॥

नृपेणाधिकृताः पूगाः श्रेणयोथ कुलानि च ।
पूर्व्वं पूर्व्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥

नृपेण राज्ञाधिकृताव्यवहारदर्शनेनियुक्ताः राज्ञा सभासदः कार्य्या इत्यादिनोक्ताः पूगाः समूहाः भिन्नजातीनां भिन्नवृत्तीनामेकस्थाननिवासिनां यथा ग्रामनगरादयः । श्रेणीनाना जातीनामेकजातीनामप्येकजातीयकर्म्मोपजीविनां सङ्घाताः । यथा हेडावुक्कानान्ताम्बूलिककुविन्दचर्म्मकारादीनाञ्चकुलानि ज्ञातिसम्बन्धिबन्धूनां समूहाः । एतेषां नृपाधिकृतादीनाञ्चतुर्णां पूर्व्वं पूर्व्वं यद्यत्पठितं तत्तत् गुरु बलवद्वेदितव्यम्। नृणां व्यवहर्तृणां व्यवहारविधौ व्यवहारदर्शनकार्य्ये एतदुक्तं भवति नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसन्तोषः कुदृष्टिबुद्ध्यापि भवति तथापिपूगादिषु पुनर्व्यवहारोन भवत्येव एवं पूगनिर्णीतेपि न श्रेण्यादिगमनम्। तथाश्रेणीनिर्णीते कुलगमनंन भवति कुलनिर्णीते तु श्रेण्यागमनम्भवति। श्रेणीनिर्णीते पूगादिगमनं पूगनिर्णीते नृपाधिकृतगमनं भवतीति। नारदेन पुनर्नृपाधिकृतैर्निर्णीतेपि व्यवहारे नृपगमनं भवतीत्युक्तं । कुलानि श्रेणयश्चैव गणाश्चाधिकृतानृपः प्रतिष्ठा व्यवहाराणां गुर्व्वेषामुत्तरोत्तरमिति । तत्र च नृपगमने सोत्तरसभ्येन राज्ञा पूर्व्वैः सभ्यैः सह सपणव्यवहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदासौ दण्ड्यः । अथासौ जयति तदाधिकृताः सभ्यादण्ड्याः । दुर्व्वलैर्व्यवहारदर्शिभिर्दृष्टोव्यवहारः परावर्त्तते प्रबलदृष्टस्तु न विवर्त्ततइत्युक्तमिदानीं प्रबलदृष्टोऽपिव्यवहारः कश्चिन्निवर्त्ततइत्याह ॥ ३० ॥

बलोपधिविनिर्वृत्तान् व्यवहारान्निवर्त्तयेत्।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा॥ ३१॥

बलेन बलात्कारेण उपधिना भयेन विनिर्वृत्तान् निष्पन्नान् व्यवहारान्निवर्त्तयेत् तथा स्त्रीभिर्नक्तं रात्रावस्त्रीभिरपि। अन्तरागारे गृहाभ्यन्तरे बहिर्ग्रामादिभ्यः शत्रुभिश्च कृतान् व्यवहारान्निवर्त्तयेदिति सम्बन्धः। अपिच॥ ३१॥

मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति॥ ३२॥

मत्तोमदनीयद्रव्येण। उन्मत्तउन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसम्भवेनोपसृष्टः। आर्त्तोव्याधिना व्यसनमिष्टवियोगानिष्टप्राप्तिजनितदुःखन्तद्वान् व्यसनी। बालोव्यवहारायोग्यः भीतोरातिभ्यः आदिग्रहणात्पुरराष्ट्रादिविरुद्धः॥

पुरराष्ट्रविरुद्धस्य यस्य राज्ञा विवर्ज्जितः। अनादेयो भवेद्वादोधर्म्मविद्भिरुदाहृतइति मनुस्मरणात्। एतैर्योजितः कृतोव्यवहारो न सिध्यति अनियुक्तासम्बद्धकृतोपि व्यवहारोन सिध्यतीति सम्बन्धः यत्तुस्मरणम्। गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः विरोधेतु मिथस्तेषां व्यवहारो न

सिध्यतीति । तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति । तेषामपि कथञ्चिद्व्यवहारस्येष्टत्वात् ॥

तथाहि । शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्य इति गौतमस्मरणात् । नोत्तमाङ्गे कथञ्चनेति मनुस्मरणाच्च । यदि गुरुः कोपावेशेन महता दण्डेनोत्तमाङ्गे ताडयति । तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति तदा भवत्येव व्यवहारपदम् । तथा भूर्य्या पितामहोपात्तेत्यादिवचनात्पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रविशति तदा पितापुत्रयोरपि भवत्येव व्यवहारः ॥

तथा दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके । गृहीतं स्त्रीधनं भर्त्ता नाकामोदातुमर्हतीति स्मरणात् । दुर्भिक्षादि व्यतिरेकेण यदि स्त्रीधनं भर्त्ता व्ययीकृत्य विद्यमानधनोपि याच्यमानो न ददाति तदा दम्पत्योरपीष्यतएव व्यवहारः । तथा भक्तदासस्य स्वामिना सह व्यवहारान् वक्ष्यति गर्भदासस्यापि गर्भदासादीनधिकृत्य ॥

यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् । दासत्वात्सव मुच्येत पुत्रभागं लभेत चेति नारदेनोक्तत्वात् तन्मोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्य्यते । तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्व्वादिभिर्व्यवहार इति

प्रथमं शिष्यादयोनिवारणीयाराज्ञा सभ्येनेति गुरोः शिष्यस्य इत्यादिश्लोकस्य तात्पर्य्यार्थः। अत्यन्तनिर्बन्धे तु शिष्यादीनाम प्युक्तरीत्या प्रवर्त्तनीयव्यवहारः॥

यदपि। एकस्य बहुभिः सार्द्धं स्त्रीणां प्रेष्यजनस्य च। अना देयोभवेद्वादोधर्मविद्भिरुदाहृतइतिनारदवचनम्। तच्चैक स्यापि॥

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः। तथा एकं घ्नता न्बहूनां चेत्यादिस्मरणादेकार्थैर्बहुभिः सार्द्धं व्यवहारइष्यत एवेति भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारोन भवतीति द्रष्टव्यं। स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्य वहारोभवत्येवेति तदन्यासां कुलस्त्रीणाम्पतिषु जीवत्सु तत्पार तन्त्र्यादनादेयव्यवहारइति व्याख्येयम्। प्रेष्यजनस्य चेत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात्स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारोनान्यथेतियोजनीयम्। परावर्त्यव्यवहारमुक्त्वेदानीं परावर्त्यद्रव्यमाह॥ ३२॥

प्रनष्टाधिगतं देयं नृपेण धनिने धनं। विभा वयेन्न चेल्लिङ्गैस्तत्समन्दण्डमर्हति॥ ३३॥

प्रनष्टं हिरण्यादि शौल्किकस्थानपालादिभिरधिगतं राज्ञे समर्पितं यत्तद्राज्ञा धनिने दातव्यम्। यदि धनी रूपसङ्ख्यादि

भिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समन्दण्ड्यः। असत्यवादित्वात् अधिगमस्य स्वत्वनिमित्तत्वात् स्वत्वे प्राप्ते तत्पराष्टत्तिरनेनोक्ता अत्र च कालावधिं वच्यति॥

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतं । अर्व्वाक् सम्वत्सरात्स्वामी हरेत परतोनृप इति मनुना पुनः सम्वत्सरत्रयमवधित्वेन निर्द्दिष्टम्॥

प्रनष्टस्वामिनं रिक्थं राजा त्र्यब्दं निधापयेत् । अर्व्वाक्त्र्यब्दाद्धरेत्स्वामी परतोनृपतिर्हरेदिति । तत्र वर्षत्रयपर्य्यन्तमवश्यं रक्षणीयम् । तत्र यदि सम्वत्सरादर्व्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्याद्यदा पुनः सम्वत्सरादूर्द्ध्वमागच्छति तदा षड्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्॥

यथाह । आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशम्वापि सतान्धर्म्ममनुस्मरन्निति । तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात् द्वितीये द्वादशं तृतीये दशमं चतुर्थादिषु षड्भागं गृहीत्वा शेषं दद्यात् । राज्ञा राजभागस्य चतुर्थांशोधिगन्त्रे दातव्यः स्वाम्यनागमेतु कृत्स्नस्य धनस्य चतुर्थमंशमधिगन्त्रे दत्वा शेषं राजा गृह्णीयात्॥

तथाह गौतमः । प्रनष्टमस्वामिकमधिगम्य सम्वत्सरम् राज्ञा रक्ष्यमूर्द्ध्वमधिगन्तुश्चतुर्थांशोराज्ञः शेषइति । अत्र सम्वत्सरमित्येकवचनमविवक्षितं । राजा त्र्यब्दं निधापयेदिति स्मरणात् । हरेत परतोनृपइत्येतदपि स्वामिन्यनागते त्र्यब्दा

दूरूं स्वीकरणाभ्यनुज्ञा परमा गते तु स्वामिनि स्वीभूते ऽपि द्रव्ये राजा स्वांशमवताय्यं तस्मन्दद्यादेतच हिरण्यादि विषयम्। गवादिविषये वच्यते पणानेकशफे दद्यादित्यादिना रथ्याप्रभृस्वप्रदेशादिनिपतितसुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह ॥ ३३ ॥

राजा लब्ध्वा निधिन्दद्याद्दिजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात्सर्व्वस्यासौ प्रभुर्य्यतः ॥ ३४ ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्। अनि
वेदितविज्ञातोदाप्यस्तन्दण्डमेवच ॥ ३५ ॥

उक्तलक्षणं निधिं राजा लब्ध्वार्द्धं ब्राह्मणेभ्योदत्वा शेषं कोशे निवेशयेत्। ब्राह्मणस्तु विद्वान् श्रुताध्ययनसम्पन्नः सदाचारोयदि निधिं लभेत तदा सर्व्वमेव गृह्णीयात्। यस्मादसौ सर्व्वस्य जगतः प्रभुः इतरेण तु राजविद्वद्ब्राह्मणव्यतिरिक्तेना विद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्वा शेषं निधिं स्वयमाहरेत्॥

यथाह वशिष्ठः अप्रज्ञायमानं वित्तं योधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशम्प्रदद्यादिति॥

गौतमोपि निध्यधिगमो राजधनं न ब्राह्मणस्याभिरूपस्य ब्राह्मणोप्याख्याता षष्ठमंशं लभेतेत्येक इति। अनिवेदितइति। कर्त्तरि निष्ठा। अनिवेदितस्यासौ विज्ञातस्य राज्ञेत्यनिवेदित विज्ञातः यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान्वि ज्ञातस्य राज्ञा स सर्व्वं निधिं दाप्योदण्डञ्च शक्त्यपेक्षया। अथ निवेरपि स्वाम्यागत्य रूपसङ्ख्यादिभिः स्वलं भावयति तदा तस्मै राजा निधिं दत्वा षष्ठं द्वादशमंशं स्वयमाहरेत्॥ यथाह मनुः। ममायमिति योब्रूयान्निधिं सत्येन मानवः। तस्याददीत षड्भागं राजा द्वादशमेव वेति। अंशविकल्पस्तु वर्ण कालाद्यपेक्षया वेदितव्यः। चौरहृतमप्याह॥ ३५॥

देयञ्चौरहृतं द्रव्यं राज्ञा जानपदाय तु। अद दद्धि समाप्नोति किल्विषं यस्य तस्य तत्॥ ३६॥

चौरैर्हृतं द्रव्यं चौरेभ्योविजित्य जानपदाय स्वदेश निवासिने यस्य तत्तस्मै राज्ञा दातव्यं हि यस्माददत् यस्य तदपहृतं द्रव्यन्तस्य किल्विषमाप्नोति तस्य चौरस्य च॥ यथाह मनुः। दातव्यं सर्व्ववर्णेभ्योराज्ञा चौरहृतन्धनम्। राजा तदुपभुञ्जानश्चौरस्याप्नोति किल्विषमिति। यदि चौर हस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्विषमाप्नोति।

अथ चौरहृतमुपेक्ष्यते तदा जानपदस्य किल्बिषं। अथ चौरहृताहरणाय यतमानोपि न शक्नुयादाहर्त्तुंन्तदा तावद्धनं स्वकोशाद्दद्यात्॥

यथाह गौतमः। चौरहृतमवजित्य यथास्थानं गमयेत्कोशाद्वा दद्यादिति॥

कृष्णद्वैपायनोपि। प्रत्याहर्त्तुमशक्तस्तु धनं चौरहृतं यदि। स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षितेति। साधारणासाधारणरूपां व्यवहारमातृकां अभिधायाधुनाष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति। अशीतिभागो वृद्धिः स्यादित्यादिना सोप्यशाधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धनइत्येवमन्तेन। तच्चर्णादानं सप्तविधम्। ईदृशमृणन्देयमीदृशमदेयमनेनाधिकारिणा देयमस्मिन्समये देयमनेन प्रकारेण देयमित्यधमर्णे पञ्चविधमुत्तमर्णे दानविधिरादानविधिश्चेति द्विविधमिति॥

एतच्च नारदेन स्पष्टीकृतम्। ऋणन्देयमदेयञ्च येन यत्र यथा च यत्। दानग्रहणधर्म्मश्च ऋणादानमिति स्मृतमिति। तत्र प्रथममुत्तमर्णस्य दानविधिमाह। तत्पूर्व्वकलादितरेषां॥ २६॥

अशीतिभागोवृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा॥ २७॥

मासि मासि प्रतिमासं बन्धकं विश्वासार्थं यदाधीयते आधि रिति यावत्। बन्धकेन सह वर्त्ततइति सबन्धकः प्रयोगस्तस्मि न्सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्याशीतितमोभागोवृद्धिर्धर्म्या भवति। अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण। द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति ब्राह्मणे द्विकं शतं क्षत्रिये त्रिकं वैश्ये चतुष्कं शूद्रे पञ्चकं मासि मासीत्येवद्वौवा त्रयोवा पञ्चवा द्वित्रिचतुःपञ्चाः द्वित्रिचतुःपञ्चाअस्मिन् शते वृद्धिर्दीयतइति द्वित्रिचतुःपञ्चकं शतम्। तदस्मिन् वृद्ध्या यत् लाभशुल्कोपपदादीयते इतिकन्। इयं वृद्धिर्मासि मासि गृह्यतइति कालिका। इयमेव वृद्धिर्द्दिवसगणनया विभज्य प्रति दिवसं गृह्यमाणा कायिका भवति॥

तथाच नारदेन। कायिका कालिका चैव कारिता च तथा परा। चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधेत्युक्तोक्रम्। कायाविरोधिनी शश्वत्पणपादादिकायिका।प्रतिमासं स्रवन्ती या वृद्धिस्सा कालिका मता। वृद्धिस्सा कारिता नाम यर्णि केन स्वयं कृता। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति गृहीतविशेषणेन वृद्धेः प्रकारान्तरमाह॥ ३७॥

कान्तारगास्तु दशकं सामुद्राविंशकं शतम्।

कान्तारमरण्यन्तच गच्छन्तीति कान्तारगाः ये वृद्ध्या

धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्का स्थानं प्रविशन्ति ते दशकं शतं दद्युः। ये च समुद्रगास्ते विंशकं शतं मासि मासीत्येव। एतदुक्तं भवति कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतं उत्तमर्णं आददीत्। मूलविनाशस्यापि शङ्कितत्वादिति इदानीं कारितां वृद्धिमाह ॥ ० ॥

## दद्युर्व्वा स्वकृतां वृद्धिं सर्व्वे सर्व्वासु जातिषु ॥ ३८ ॥

सर्व्वे ब्राह्मणादयोऽधमर्णाः शबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्व्वासु जातिषु दद्युः। कचिदकृतापि वृद्धि र्भवति॥

यथाह नारदः। न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता कचित्। अनाकारितमप्यूर्द्धं वत्सरार्द्धाद्विवर्द्धत इति। यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेनोक्तं॥

यो याचितकमादाय तमदत्वा दिशं व्रजेत्। ऊर्द्धं सम्वत्सरात्तस्य तद्धनं वृद्धिमाप्नुयादिति यस्तु याचितकमादाय याचितोप्यदत्वादेशान्तरं याति तम्प्रति तेनैवोक्तं। कृतोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत्। ऊर्द्धं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयादिति यः पुनः स्वदेशे स्थितएव याचितो याचितकं न ददाति तं याचनकालादारभ्य वृद्धिं दापयेद्राजा॥

यथाह । स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् । तञ्चतोऽकारितां वृद्धिमनिच्छन्तं च दापयेदिति । अनाकारित वृद्धेरपवादो नारदेनोक्तः ॥

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः । वृथादाना क्षिकपणा वर्द्धन्ते नाविवक्षिताः । अविवक्षिता अनाकारिता इति । अधुना द्रव्यविशेषे वृद्धिविशेषमाह ॥ ३८ ॥

सन्ततिस्तु पशुस्त्रीणां

पशूनां स्त्रीणां सन्ततिरेव वृद्धिः पशूनां स्त्रीणाम्पोषणा समर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः सम्भवति । ग्रहणञ्च क्षीरपरिचर्य्यार्थिनः । अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहण मन्तरेण चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह ॥ ० ॥

रसस्याष्टगुणा परा । वस्त्रधान्यहिरण्यानाञ्चतु स्त्रिद्विगुणा परा ॥ ३९ ॥

रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य सकृतया वृद्ध्या वर्द्धमानस्याष्टगुणा वृद्धिः परा नातः परं

अ

वर्द्धते। तथा वस्त्रधान्यहिरण्यानां यथासङ्ख्यं चतुर्गुणाः। त्रिगुणा द्विगुणा च वृद्धिः परा। वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तं। द्विगुणं हिरण्यं त्रिगुणं धान्यं। धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च। तुलाधृतं त्रितयमष्टगुणमिति। मनुना तु धान्यस्य पुष्पमूलफलादीनाञ्च पञ्चगुणत्वमुक्तं॥

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चतामिति शदः क्षेत्रफलं पुष्पमूलफलादि। लवो मेषोर्णाचमरीकेशादि। वाह्यो बलीवर्द्दतुरगादिः। धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामतीति तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या। एतच्च सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम्। पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे अनेकशः प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्यात्यतिक्रमस्य पूर्व्ववद्वर्द्धते। सकृत्प्रयोगेऽपि प्रतिदिनम्प्रतिमासम्प्रतिवत्सरं वा वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यसम्भवात्। पूर्व्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्द्धतएव॥

यथाह मनुः। कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता। सकृदाहितेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदन्तस्य वृद्धिः कुसीदवृद्धिर्द्वैगुण्यं नात्येति नातिक्रामति यदि सकृदाहिता सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति सकृदाहृतेति पाठे शनैः शनैः प्रति

द्दिगुणमतिमासं प्रतिवत्सरं वाधमर्णाद्दाहृता द्वैगुण्यमात्येतीति व्याख्येयम् ॥

तथा गौतमेनाप्युक्तम् । चिरस्थाने द्वैगुण्यम्प्रयोगस्येति प्रयोगस्येत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः । चिरस्थानद्दति निर्देशाच्छनैः शनैर्वृद्धिर्ग्रहणे द्वैगुण्यातिक्रमोदर्शितः । ऋणप्रयोगधर्मा उक्ताः साम्प्रतम्प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते ॥ ४० ॥

प्रपन्नं साधयन्नर्थं न वाच्योनृपतेर्भवेत् । साध्यमानोनृपङ्गच्छन् दण्ड्योदाप्यश्च तद्धनं ॥ ४१ ॥

प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिर्भावितं वा साधयन्प्रत्याहरन्धर्मादिभिरुपायैरुत्तमर्णोनृपतेर्नवाच्यो निवारणीयोन भवति । धर्मादयश्चोपाया मनुना दर्शिताः ॥

धर्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन चेति धर्मेण प्रीतियुक्तेन सत्यवचनेन व्यवहारेण साक्षिलेख्याद्युपायेन छलेन उत्सवादिव्याजेन भूषणादेर्ग्रहणेन आचरितेन अभोजनेन । पञ्चमेनोपायेन बलेन निगडबन्धनादिना । उपचयार्थं प्रयुक्तन्द्रव्यमेतैरुपायैरात्मसात्कुर्य्यादिति । प्रपन्नं साधयन्नर्थं नवाच्यद्दति वदन्न प्रतिपन्नं साधयन् राज्ञा निवारणीयद्दति दर्शयति । एतदेव स्पष्टीकृतङ्कात्यायनेन ॥

पीडयेद्योधनी कश्चिद्दत्तिकं न्यायवादिनं। तस्मादर्थात्सहीयेत तत्समं चाप्नुयाद्दममिति। यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानोधार्यमाणोनृपकृच्छेत् राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्ड्योभवति प्रत्यनुसारेण। धनिने तद्धनन्दाप्यश्च। राज्ञा दापने च प्रकारादर्शिताः॥

राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत्। देशाचारेण चान्यांस्तु दुष्टान्संपीड्य दापयेत्। रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेदिति। साध्यमानोनृपकृच्छेदित्येतत् स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं बोद्धव्यं। बहूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्योराज्ञेत्यपेक्षितमाह॥ ४१॥

गृहीतानुक्रमाद्दाप्योधनिनामधमर्णिकः। दत्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्॥ ४२॥

समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतन्तेनैव क्रमेणाधमर्णिकोदाप्योराज्ञोभिन्नजातीयेषु तु ब्राह्मणादिक्रमेण। यदा तु पुनरुत्तमर्णोदुर्बलः प्रतिपन्नमर्थन्धर्मादिभिरुपायैः साधयितुमशक्नुवन् राज्ञा साधितार्थोभवति तदाधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह॥ ४२॥

राज्ञाधमर्णिकोदाप्यः साधिताद्दशकं शतम् ।
पञ्चकञ्च शतन्दाप्यः प्राप्तार्थोह्युत्तमर्णिकः ॥ ४३ ॥

अधमर्णिको राज्ञा प्रतिपन्नार्थात्साधिताद्दशकं शतं दाप्यः
प्रतिपन्नस्य साधितस्यार्थस्य दशममंशं राजाधमर्णिकाद्दण्ड
रूपेण गृह्णीयादित्यर्थः । उत्तमर्णिकस्तु प्राप्तार्थः पञ्चकं शतं
भृतिरूपेण दाप्यः । साधितस्यार्थस्य विंशतितमं भागम् । उत्तम
र्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः । अप्रतिपन्नार्थसाधने तु
दण्डविभागोदर्शितोनिह्नवे भावितोदद्यादित्यादिना । सधन
मधमर्णिकम्प्रत्युक्तमधुना निर्धनमधमर्णिकम्प्रत्याह ॥ ४३ ॥

हीनजातिम्परिक्षीणमृणार्थं कर्म्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्योयथोदयम् ॥ ४४ ॥

ब्राह्मणादिजातिरुत्तमर्णोहीनजातिं क्षत्रियादिम्परिक्षीणं
निर्धनमृणार्थमृणनिवृत्त्यर्थं कर्म्मस्वजात्यनुरूपं कारयेत्कुटुम्बा
विरोधेन । ब्राह्मणः पुनः परिक्षीणोनिर्धनः शनैः शनै
र्यथोदयम् यथासम्भवमृणन्दाप्यः । अत्र हीनजातिग्रहणं सम
जातेरप्युपलक्षणमतस्स समजातिमपि परिक्षीणं यथोचितं
कर्म्म कारयेत् । ब्राह्मणग्रहणञ्च श्रेयोजातेरुपलक्षणमतस्स

क्षत्रियादिरपि चीणोवैश्यादेः शनैः शनैर्हीयोयथोदयम् एत द्देव स्पष्टीकृतं मनुना ॥

कर्म्मणापि समं कुर्य्याद्धनिकेनाधमर्णिकः। समोपकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैरिति। उत्तमर्णेन समं निकृष्टोत्तमर्णा धमर्णव्यपदेश्यमात्मानमधमर्णः कर्म्मणा कुर्य्यादित्यर्थः॥ ४४ ॥

किञ्च। दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनं।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परम्॥ ४५ ॥

उपचयार्थं धनमधमर्णेन दीयमानमुत्तमर्णोवृद्धिलोभा यदि न गृह्णाति तदाधमर्णेन मध्यस्थहस्ते स्थापितं यदि स्यात्तदा ततः स्थापनादूर्द्धन्न वर्द्धते। अथ स्थापितमपि याच्य मानोन ददाति ततः पूर्व्ववद्वर्द्धतएव। इदानीन्देयमृणं यदा येन च देयन्तदाह॥ ४५ ॥

अविभक्तैः कुटुम्बार्थे यदृणन्तु कृतम्भवेत्।
दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि॥ ४६ ॥

अविभक्तैर्ब्बहुभिः कुटुम्बार्थमेकैकेन वा यदृणं कृतन्तदृणं कुटुम्बी दद्यात्तस्मिन् प्रेते प्रोषिते वा तदृक्थिनः सर्व्वे दद्युः। येन देयमित्यत्र प्रत्युदाहरणमाह॥ ४६ ॥

न योषित्पतिपुत्राभ्यान्न पुत्रेण कृतम्पिता। दद्या
दृते कुटुम्बार्थान्न पतिः स्त्रीकृतन्तथा ॥ ४७ ॥

पत्या कृतमृणं योषिद्भार्य्या नैव दद्यात्पुत्रेण कृतं योषि
न्माता न दद्यात्। तथा पुत्रेण कृतं पिता न दद्यात्तथा भार्य्या
कृतम्पतिर्न दद्यात्कुटुम्बार्थादृतदति सर्व्वशेषमतस्य कुटुम्बार्थं
येन केनापि कृतं तत्कुटुम्बिना देयम्। तदभावे तद्दायहरैर्देय
मिति उक्तमेव। पुत्रपौत्रैर्ऋणं देयमिति वक्ष्यति तस्य पुरस्ता
दपवादमाह ॥ ४७ ॥

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्।
वृथादानन्तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४८ ॥

सुरापानेन यत्कृतमृणं कामकृतं स्त्रीव्यसनेन कृतम्।
द्यूते पराजयनिवृत्तं दण्डशुल्कयोरवशिष्टं वृथादानं धूर्त
वन्दिमल्लादिभ्योयत्प्रतिज्ञातम् ॥

धूर्त्ते वन्दिनिमल्ले च कुवैद्ये कितवे शठे। चाटचारण
चौरेषु दत्तम्भवति निःफलमिति स्मरणात्। एतदृणम्पित्रा
कृतम्पुत्रादिः शौण्डिकादिभ्योन दद्यात्। अत्र दण्डशुल्काव
शिष्टकमित्यवशिष्टग्रहणात्सर्व्वं दातव्यमिति न मन्तव्यम् ॥

दण्डम्वा दण्डशेषं वा शुल्कन्तच्छेषमेव वा। न दातव्यन्तु
पुत्रेण यच्च न व्यावहारिकमित्यौशनः स्मरणाद्गौतमेनाप्युक्तम् ॥

मद्यभृक्षद्यूतदण्डान पुत्रानध्यावहेयुरिति । न पुत्रस्ते परि भवन्तीत्यर्थः अनेनादेयमृणमुक्तम् । न पतिः स्त्रीकृतं तथेत्यस्यापवादमाह ॥४८॥

गोपशौण्डिकशैलूषरजकव्याधयोषितां । ऋणं
न्दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ ४९ ॥

गोपोगोपालः शौण्डिकः सुराकारः शैलूषोनटः रजको वस्त्राणां रञ्जकः । व्याधोमृगयुः एषां योषिद्भिर्यदृणं कृतन्त त्पतिभिर्देयं यस्मात्तेषां वृत्तिर्जीवनं तदाश्रया योषिद धीना । यस्माद्वृत्तिस्तदाश्रयेति हेतुव्यपदेशादन्येऽपि ये योषि दधीनजीविनस्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते । पतिकृत म्भार्या न दद्यादित्यस्यापवादमाह ॥ ४९ ॥

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥ ५० ॥

मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने यत्प्रतिपन्न न्तत्पतिकृतमृणन्देयं यच्च पत्या सह भार्यया कृतन्तदपि भर्त्र भावे भार्यया अपुत्रया देयं । यच्च स्वयमेव कृतमृणन्तदपि

देयं। ननु प्रतिपन्नादित्रयं स्त्रिया देयमिति न वक्तव्यम्। सन्देहाभावात्। उच्यते॥

भार्य्या पुत्रस्य दासस्त्रयएवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति वचनान्निर्धनत्वेन प्रतिपन्नादिष्वदानशङ्कायामिदमुच्यते। प्रतिपन्नं स्त्रिया देयमित्यादि। नचानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते पारतन्त्र्यमात्रप्रतिपादनपरत्वात्। एतच्च विभागप्रकरणे स्पष्टीकरिष्यते। नान्यत् स्त्री दातुमर्हतीत्येतर्त्तर्हि न वक्तव्यं। विधानेनैवान्यत्र प्रतिषेधसिद्धेः। उच्यते॥

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतमित्यनयोरपवादार्थमुच्यते। अन्यच्च सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमिति। पुनरपि यदृणं दातव्यं येनच दातव्यं यत्र च काले दातव्यन्तत्त्रितयमाह॥ ५०॥

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा। पुत्रपौत्रैर्ऋणन्देयं निह्नवे साक्षिभावितं॥ ५१॥

पिता यदि दातव्यमृणमदत्वा प्रेतोदूरदेशङ्गतोऽचिकित्सनीयव्याध्याद्यभिभूतोवा तदा तत्कृतमृणमवश्यन्देयं पुत्रेण पौत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन च। तत्र क्रमोप्ययमेव

पितृभावे पुत्रः पुत्राभावे पौत्र इति । पुत्रेण पौत्रेण वा निह्नवे कृतेऽर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः । अत्र पितरि प्रोषित इत्येतावदुक्तं कालविशेषस्तु नारदेनोक्तो द्रष्टव्यः ॥

नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः । ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वेति प्रेतेऽप्यप्राप्तव्यवहारकालस्तु न दद्यात् । प्राप्तव्यवहारकालस्तु दद्यात् स च कालस्तेनैव दर्शितः । गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः । बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते ॥ परतो व्यवहारज्ञः स्वतन्त्रः पितरावृत इति । यद्यपि पितृमरणादूर्द्ध्वं बालोपि स्वतन्त्रो जातस्तथापि न ऋणभाग्भवति ॥

यथाह । अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक् । स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतमिति ॥ तथा आसेधाकालनिषेधस्य दृश्यते ॥

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती । विषमस्थश्च नासेध्यो न चैतानाह्वयेन्नृप इति तस्मात् ॥

अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः । ऋणात्पिता मोचनीयो यथा नो नरकं व्रजेदिति । पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्याप्यधिकारः न ब्रह्माभिव्याहारयेदन्यत्र स्वधा निनयनादिति गौतमस्मरणात् पुत्रपौत्रैरिति बहुवचननिर्देशाद्बहवः पुत्रा यदि

विभक्ताः स्वांशानुरूपेणर्णन्दद्युः । अविभक्तास्तेऽभ्यूयवमुत्था
नेन गुणप्रधानभावेन वर्त्तमानानां प्रधानभूतएव दद्यादिति
गम्यते ॥

तथाह नारदः । अतऊर्द्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः ।
अविभक्ताविभक्तावा यस्तामुद्वहते धुरमिति । अत्र च यद्यपि
पुत्रपौत्रैर्ऋणं देयमित्यविशेषेणोक्तं । तथापि पुत्रेण यथापिता
सवृद्धिकन्ददाति तथैव देयं पौत्रेण तु समं मूलमेव दातव्यं
न वृद्धिरिति विशेषोवगन्तव्यः ॥

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् । पैतामहं समं
देयमदेयं तत्सुतस्य त्विति वृहस्पतिवचनात् । अत्र विभावित
मित्यविशेषोपादानात्साक्षिभावितमित्यत्र साक्षिग्रहणं प्रमाणो
पलक्षणम् । समं यावद्गृहीतं तावदेव देयं न वृद्धिः तत्सुतस्य
प्रपौत्रस्यादेयमगृहीतधनस्य । एतच्चोत्तरश्लोके स्पष्टयिष्यते ।
ऋणापाकरणे ऋणी तत्पुत्रः पौत्रइति त्रयः कर्त्तारोदर्शिताः
तेषाञ्च समवाये क्रमोपि दर्शितः । इदानीं कर्त्रन्तरसमवाये
च क्रममाह ॥ ५१ ॥

रिक्थग्राहऋणं दाप्योयोषिद्ग्राहस्तथैव च ।
पुत्रोनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ ५२ ॥

अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति
तद्रिक्थं विभागद्वारेण रिक्थं गृह्णातीति रिक्थग्राहः स ऋणं

दाप्य एतदुक्तम्भवति योयदीयन्द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतं ऋणं दाप्योस चैरादिरिति योषितं भार्य्यां गृह्णातीति योषिद्ग्राहः स तथैव ऋणं दाप्यःयोयदीयां योषितं गृह्णाति। सतत्कृतमृणन्दाप्यः योषितोऽविभाज्यद्रव्यत्वेन ऋक्थव्यपदेशा नर्हत्वाद्भेदेन निर्देशः पुत्रश्चानन्याश्रितद्रव्यऋणन्दाप्यः। अन्य माश्रितमन्याश्रितमात्दपितृसम्बन्धिद्रव्यं यस्यासावन्याश्रित द्रव्यः न अन्याश्रितद्रव्योऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिन ऋणं दाप्यइतिसम्बन्धः। एतेषां समवाये क्रमस्य पाठक्रम एव ऋक्थग्राह ऋणं दाप्यस्तदभावे योषिद्ग्राहस्तदभावे पुत्रइति। नन्वेतेषां समवायएव नोपपद्यते॥

न भ्रातरोन पितरः पुत्रा ऋक्थहराः पितुरिति पुत्रे सत्यन्यस्य ऋक्थग्रहणासम्भवात्। योषिद्ग्राहोपि नोपपद्यते। न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यतइति स्मरणात्। तदृणं पुत्रोदाप्यइत्यपि युक्तं पुत्रपौत्रैर्ऋणं देयमित्युक्तत्वात्। अनन्याश्रितधनइति विशेषणमप्यनर्थकम् पुत्रे सति द्रव्यस्या न्याश्रयणासम्भवात्। सम्भवे च ऋक्थग्राहइत्यनेनैव गतार्थ त्वात्। पुत्रहीनस्य ऋक्थिनइत्येतदपि न वक्तव्यम्। पुत्रे सत्यपि ऋक्थग्राह ऋणन्दाप्यइति स्थितमसति पुत्रे ऋक्थग्राहः सुतराम्दाप्यइति सिद्धमेवेति। अत्रोच्यते। पुत्रे सत्यप्यन्य ऋक्थ ग्राही सम्भवति क्लीवान्धबधिरादीनां पुत्रत्वेऽपि ऋक्थहरत्वा भावात्। तथाच क्लीवादीननुक्रम्य भर्त्तव्यास्तु निरंशकाइति

वक्ष्यति तथा सवर्णापुत्रोऽप्यन्याय्यवृत्तो न लभेतेति केषामिति गौतमवचनात्। अतश्च क्लीवादिषु पुत्रेषु सत्स्वन्यायवृत्तेषु सवर्णापुत्रे सति ऋक्थग्राही पितृव्यतत्पुत्रादिः। योषिद्ग्राहो यद्यपि शास्त्रविरोधेन न सम्भवति तथाप्यतिक्रान्तनिषेधः पूर्व्वं पतिकृतर्णापाकरणाधिकारी भवत्येव योषिद्ग्राहश्चात्र स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भ्वां तिसृणामाद्यमां॥

यथाह नारदः। परपूर्व्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमं पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥ कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा॥ देशधर्म्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते। उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्त्तिता॥ उत्पन्नसाहसा उत्पन्नव्यभिचारा। असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते। सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता॥ स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति। कामात्समाश्रयेदन्यम्प्रथमा स्वैरिणी तु सा॥ कौमारम्पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता॥ मृते भर्तरि तु प्राप्तान् देवरादीनपास्य या। उपगच्छेत्परं कामात्सा तृतीया प्रकीर्त्तिता॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या। तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता॥ अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम्। ऋणन्तयोः पतिकृतन्दद्याद्यस्तामुपाश्रितइति। तथान्योपि योषिद्ग्राहः ऋणापाकरणाधिकारी तेनैव दर्शितः॥

या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत्। सोऽस्या दद्यादृणं भर्त्तुरुत्सृजेद्वा तथैव ताम्॥ प्रकृष्टेन धनेन सह वर्त्तत इति सप्रधना। बहुधनेति यावत्॥

तथा अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्। ऋणं वोढुः स भजते सैव चास्य धनं स्मृतमिति पुत्रस्य पुनर्वचनं क्रमार्थम्। अनन्याश्रितद्रव्य इति बहुपुत्रेषु ऋक्थाभावेऽप्यंशग्रहणयोग्यस्यैव ऋणापाकरणाधिकारो नायोग्यस्यान्धादेरित्येवमर्थम्। पुत्रहीनस्य ऋक्थिन इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि ऋक्थं गृह्णन्ति तदृणं दाप्या नान्यथेत्येवमर्थः पुत्रपौत्रौ तु ऋक्थग्रहणाभावेऽपि दाप्यावित्युक्तम्॥

यथाह नारदः। क्रमादभ्यागतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतं। दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्त्तत इति सर्व्वं निरवद्यम्। यदा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तं तस्याभावे योषिद्ग्राहो दाप्य इत्युच्यते। पुत्रहीनस्य ऋक्थिन इति ऋक्थशब्देन योषिदेवोच्यते। सैव चास्य धनं स्मृतमिति स्मरणात्॥

यो यस्य हरते दारान् स तस्य हरते धनमिति च। ननु योषिद्ग्राहाभावे पुत्रऋणन्दाप्यः पुत्राभावे योषिद्ग्राह इति परस्परं विरुद्धम्। उभयसद्भावे न कश्चिद्दाप्य इति नैव दोषः अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः स प्रधनस्त्री हारिणस्याभावे पुत्रो दाप्यः पुत्राभावे तु निर्द्धननिरपत्ययोषिद्ग्राही दाप्य इति॥

एतदेवोक्तम्। नारदेन। धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्। पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः। धनस्त्रीहारिपुत्राणां समवाये योधनं हरेत्स ऋणभाक्। पुत्रो ऽसतोः स्त्रीधनिनोः स्त्री च धनञ्च स्त्रीधने ते विद्यते ययोः तौ स्त्रीधनिनौ तयोः स्त्रीधनिनोः असतोः पुत्र एवर्णभाक् धनिपुत्रयो रसतोः स्त्रीहार्य्येवर्णभाक् स्त्रीहार्य्यभावे पुत्र ऋणभाक्। पुत्राभावे स्त्रीहारीति विरोधप्रतिभासपरीहारः पूर्व्ववत्। पुत्रहीनस्य रिक्थिनइत्यस्यान्या व्याख्या एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्याइति विवक्षायामुक्तमर्थस्य दाप्यास्तदभावे तत्पुत्रादेः पुत्राद्यभावे कस्य दाप्यइत्यपेक्षायामिदमुपतिष्ठते। पुत्रहीनस्य रिक्थिनइति पुत्राद्यन्वयहीनस्योक्तमर्थस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनोदाप्याः॥

तथाच नारदेन। ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः। निर्व्वापयेत्सकुल्येषु तदभावेस्य बन्धुष्वित्यभिधाया भिहितं॥ यदा तु न सकुल्याः स्युर्नच सम्बन्धिबान्धवाः तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेदिति। अधुना पुरुषविशेषे ऋणग्रहणप्रतिषेधनप्रसङ्गादन्यदपिप्रतिषेधति॥ ५२॥

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥ ५३॥

प्रतिभुवोभावः प्रातिभाव्यम् । भ्रातृणां दम्पत्योः पिता पुत्रयोश्चाविभक्ते द्रव्ये द्रव्यविभागात्प्राक् प्रातिभाव्यमृणं साक्ष्यञ्च न स्मृतं मन्वादिभिः। अपितु प्रतिषिद्धं साधारणधन त्वात् प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यव्ययावसानत्वात् ऋणस्य चावश्यप्रतिदेयत्वात् एतच्च परस्परानुमतिव्यतिरेकेण पर स्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादिभवत्येव विभागा दूर्द्ध्वन्तु परस्परानुमतिव्यतिरेकेणाऽपि भवति । ननु दम्पत्यो र्व्विभागात्प्राक् प्रातिभाव्यादिप्रतिषेधोन युज्यते तयोर्व्विभागा भावेन विशेषणानर्थक्याद्विभागाभावश्च ॥

आपस्तम्बेन दर्शितः जायापत्योर्न्न विभागोविद्यतइति । सत्यं श्रौतस्मार्त्ताग्निसाध्येषु कर्म्मसु तत्फलेषु च विभागाभावो न पुनः सर्व्वकर्म्मसु द्रव्येषु च। तथाहि । जायापत्योर्न विभागो विद्यतइत्युक्त्वा किमिति न विद्यतइत्यपेक्षायां हेतुमुक्तवान् । पाणिग्रहणाद्धि सहत्वङ्कर्म्मसु तथा पुण्यफलेषु चेति हि यस्मा त्पाणिग्रहणादारभ्य कर्म्मसु सहत्वं श्रूयते जायापती अग्निमाद धीयातामिति। तस्मादाधाने सहाधिकारादाधानसिद्धाग्नि साध्येषु कर्म्मसु सहाधिकारः तथा कर्म्म स्मार्त्तं विवाहाग्ना वित्यादि स्मरणात् विवाहसिद्धाग्निसाध्येष्वपि कर्म्मसु सहाधि कारएव। अतश्चोभयविधाग्निनिरपेक्षेषु कर्म्मसु पूर्त्तेषु जाया पत्योः पृथगेवाधिकारः सम्पद्यते। तथा पुण्यानां फलेषु स्वर्गा दिषु जायापत्योः सहत्वं श्रूयते॥

दिवि ज्योतिरजरमारभेतामित्यादि। येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यम्। न पुनः पूर्त्तानां भर्त्रननुज्ञयानुष्ठितानां फलेष्वपि ननु द्रव्यस्वामित्वेऽपि सहत्व मुक्तम्। द्रव्यपरिग्रहेषु नहि च भर्त्तुर्व्विप्रवासे नैमित्तिकदाने स्तेयमुपदिशन्तीति। सत्यं द्रव्यस्वामित्वं पत्न्यादर्शितमनेन न पुनर्विभागाभावः यस्माद्द्रव्यपरिग्रहेष चेत्युक्ता तत्र कारण मुक्तम्भर्त्तुर्विप्रवासेनैमित्तिकेऽवश्यकर्त्तव्यदाने तिथिभोजन भिक्षादानादौ हि यस्मान्न स्तेयमुपदिशन्ति मन्वादयः तस्मा द्भार्य्यायाअपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति तस्माद्भर्त्तुरिच्छया भार्य्यायाअपि द्रव्यविभागोभवत्येव न स्वेच्छया। यथा वक्ष्यति। यदि कुर्य्यात्समानांशान्पत्न्यः कार्य्याः समांशिकाइति। अधुना प्रातिभाव्यं निरूपयितुमाह ॥ ५३ ॥

**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते। आद्यौ तु वितथे दाप्यावितरस्य सुताअपि ॥ ५४ ॥**

प्रातिभाव्यं विश्वासार्थं पुरुषान्तरेण सह समयः तच्च विषय भेदास्त्रिधा भिद्यते। यथा। दर्शने दर्शनापेक्षायामेनन्दर्श यिष्यामीति प्रत्यये विश्वासे मत्प्रत्ययेनास्य धनमयच्छ नायं त्वां वञ्चयिष्यते। यतोमूकस्य पत्तोषमुर्व्वरा प्रायभूरस्य ग्राम

वरोऽस्मीति दाने चायं न ददाति तदानीमहमेव धनं दास्या मीति प्रातिभाव्यमभिधीयतइति प्रत्येकं सम्बन्धः। आद्यौतु दर्शनप्रत्ययप्रतिभुवौ वितथे अन्यथाभावे अदर्शने विश्वास व्यभिचारे च दाप्यौ राज्ञा प्रस्तुतं धनमुत्तमर्णस्य। इतरस्य दानप्रतिभुवः सुताअपि दाप्याः। वितथे इत्येव चायेन निर्द्धन त्वेन वा अधमर्णे प्रतिकुर्वेति। इतरस्य सुताअपीति वदता पूर्व्वयोः सुता न दाप्याः इत्युक्तम्। सुताइति वदता न पौत्रा दाप्याइति दर्शितम्। एतदेव स्पष्टीकर्त्तुमाह॥ ५४॥

दर्शनप्रतिभूर्य्यत्र मृतः प्रात्ययिकोऽपि वा। न तत्पुत्राऋणं दद्युर्दद्युर्दानाय यः स्थितः॥ ५५॥

यदा दर्शनप्रतिभूः प्रात्ययिकोवा प्रतिभूर्दिवं गतः तदा तयोः पुत्रा प्रातिभाव्यायातं पैतृकं ऋणं न दद्युः यस्तु दानाय स्थितः प्रतिभूर्दिवं गतस्तस्य पुत्रादद्युर्न पौत्राः। ते च मूलमेव दद्युर्न वृद्धिं॥

ऋणं पैतामहं पौत्राः प्रातिभाव्यागतं सुतः। समन्दद्या त्तत्सुतौ तु न दाप्याविति नियमइति व्यासवचनात्। प्राति भाव्यव्यतिरिक्तम्पैतामहमृणं पौत्रः समं यावद्गृहीतं तावदेव दद्यान्न वृद्धिं। तथा तत्सुतोपि प्रातिभाव्यागतम्पित्र्यमृणं सम मेव दद्यात्तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ च प्राति

भाव्यायातमप्रातिभाव्यस्वर्णं यथाक्रममगृहीतवित्ता न दाप्या विति यदपि स्मरणं॥

स्यादकोविस्तहीनः स्याद्यग्नकोविस्तवान्यदि । मूलमस्य भवेद्देयं न वृद्धिन्दातुमर्हतीति तदपि सग्नकः प्रतिभूः स्यादको ऽधमर्णः। लग्नकोयदि वित्तवान् मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं। न वृद्धिरितिव्याख्येयम् । यत्र दर्शनप्रतिभूर्वा बन्ध कमर्प्यात्तं गृहीत्वा प्रतिभूर्मृतः तत्पुत्रोऽपि तस्मादेव बन्ध कात्प्रातिभाव्यायातमृणन्दद्युरेव॥

यथाह कात्यायनः। गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत्। विनापित्रा धनात्तस्माद्दाप्यः स्यात्तद्दृणं सुतइतिदर्शन ग्रहणं प्रत्ययोपलक्षणं विना पित्रा पितरि प्रेते दूरदेशं गते वेति। यस्मिन्ननेकप्रतिभूसम्भवस्तत्र कथं दातव्यमित्याह॥५५॥

वहवः स्युर्य्यदि स्वांशैर्द्दद्युः प्रतिभुवोधनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथा रुचि ॥५६॥

यद्येकस्मिन् प्रयोगे द्वौ वहवो वा प्रतिभुवस्तदृणं विभज्य स्वांशेन दद्युः। एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छायासादृश्यं तामाश्रिताः एकच्छायाश्रिताः अधमर्णोयथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवोपि प्रत्येकं कृत्स्न

दानाय स्थिताः । एवन्दर्शनप्रत्यये च तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम्। अतश्च धनिकोवित्ताद्यपेक्षया स्वार्थं प्रार्थयते सएव कृत्स्न न्दद्यान्नांशतः । एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गत स्तत्पुत्रश्च सन्निहितस्तदा धनिकेच्छया स सर्व्वं दाप्यः मृते तु कस्मिंश्चित्तत्पित्र्यमंशमवृद्धिकं दाप्यः॥

यथाह कात्यायनः। एकच्छायाप्रविष्टानां दाप्योयस्तत्र दृश्यते। प्रोषिते तत्सुतः सर्व्वं पित्र्यमंशं मृते सति॥ प्रातिभाव्य र्णदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह॥ ५६ ॥

प्रतिभूर्दापितोयत्तु प्रकाशं धनिनोधनम्।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्॥ ५७॥

यहणं प्रतिभूस्तत्पुत्रोवा धनिकेनोपपीडितः। प्रकाशं सर्व्व जनसमक्षं राज्ञा धनिनां दापितो न पुनर्द्वैगुण्यलोभेन स्वय मुपेत्य दत्तम्॥

यथाह नारदः। यञ्चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः। ऋणिकस्तत्प्रतिभुवे द्विगुणं प्रतिदापयेदिति। ऋणिकैरधमर्णै स्तस्य प्रतिभुवोद्रव्यं द्विगुणं प्रतिदातव्यं स्यात्। तत्र काल विशेषमनपेक्ष्य सद्यएव द्विगुणं दातव्यं। वचनारम्भसामर्थ्यात्।

एतच्च हिरण्यविषयं। नन्विदं वचनं द्वैगुण्यमात्रप्रतिपादयति तच्च पूर्व्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते। यथा आतेष्टि विधानं शुङ्गचित्याबाधेन। अपिच सद्यः सवृद्धिकदानपक्षे पशु स्त्रीणां सद्यः सन्तत्यभावान्मूलदानमेव प्राप्नोतीति तदसत्। वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणापरेत्यनेनैव कालकला क्रमेण द्वैगुण्यादिसिद्धेर्द्वैगुण्यमात्रविधानइदम्वचनमनर्थकं स्यात्। पशुस्त्रीणान्तु कालक्रमपक्षे सन्तत्यभावे स्वरूपदान मेव। यदा प्रतिभूरपि द्रव्यदानान्तरं कियता कालेनाधमर्णेन सङ्घटते तदा सन्ततिरपि सम्भवत्येव यदा पूर्व्वसिद्धसन्तत्या सह पशुस्त्रियोदास्यतीति न किञ्चिदेतत् अथ प्रातिभाव्यं प्रीतिकृतमतस्य प्रतिभुवा दत्तं प्रीतिदत्तमेव नच प्रीतिदत्तस्य याचनात्प्राक् वृद्धिरस्ति॥

यथाह। प्रीतिदत्तन्तु यत्किञ्चिद्वर्द्धते न त्वया चितम्। याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतमिति॥ अतस्य प्रीतिदत्त स्यायाचितस्यापि दानदिवसादारभ्य यावत् द्विगुणं काल क्रमेण वृद्धिरित्यनेन वचनेनोच्यतइति। तदप्यसत्। अस्यार्थ स्यास्माद्वचनादप्रतीतेः द्विगुणं प्रतिदातव्यमित्येतावदिह प्रती यते तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भ सामर्थ्यादिति सुष्ठूक्तम्। प्रतिभूदत्तस्य सर्व्वत्र द्वैगुण्ये प्राप्तेऽप वादमाह॥ ५७॥

सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च। वस्त्रं चतुर्गुणं प्रोक्तं रसस्त्वष्टगुणस्तथा॥ ५८॥

हिरण्यद्वैगुण्यवस्त्राणामादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः श्लोकस्तु व्याख्यातएव यस्य द्रव्यस्य यावती वृद्धिः परा काष्ठोक्ता तद्द्रव्यम्प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्योदातव्यमिति तात्पर्य्यार्थः यदा तु दर्शनप्रतिभूः सम्प्रतिपन्ने कालेऽधमर्णन्दर्शयितुमसमर्थस्तदा तदन्वेषणाय तस्य पक्षत्रयन्दातव्यम्। तत्र यदि दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनन्दाप्यः॥

नष्टस्यान्वेषणार्थन्तु दाप्यम्पक्षत्रयं परं॥ यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥ काले व्यतीते प्रतिभूर्य्यदि तं नैव दर्शयेत्। निबन्धन्दापयेत्तन्तु प्रेते चैष विधिः स्मृतइति कात्यायनवचनात्। लग्नके विशेषनिषेधस्य तेनैवोक्तः॥

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा॥ निरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित्। नैवरिक्थी न मित्रञ्च न चैवात्यन्तवासिनः॥ राजकार्य्यनियुक्तश्च येच प्रव्रजिता नराः। न शक्तोधनिने दातुन्दण्डं राज्ञे च तत्समम्॥ जीवन्नापि पिता यस्य तथैवेच्छाप्रवर्त्तकः। ना विज्ञातोगृहीतव्यः प्रतिभूः स्वक्रियां प्रतीति। सन्दिग्धोभिशस्तः। अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः। इति प्रतिभूविधिः॥

धनप्रयोगे द्वौ विश्वासहेतू प्रतिभूराधिश्च। यथाह नारदः। विश्वासहेतू द्वावत्र प्रतिभूराधिरेव चेति। तत्र प्रतिभूर्निरूपितइदानीमाधिर्निरूप्यते आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते आधीयत इत्याधिः सच द्विधैव कृतकालोऽकृतकालश्च पुनश्चैकैको द्विविधः गोप्योभोग्यश्च॥

यथाह नारदः। अधिक्रियतइत्याधिः स विज्ञेयोद्विलक्षणः। कृतकालोऽपनेयश्च यावद्देयोद्यतस्तथा॥ स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव चेति॥

कृते काले आधानकालएवामुष्मिन्काले दत्तेत्वया द्रव्ये मयायमाधिर्मोक्तव्योन्यथा तवैवाधिर्भविष्यतीत्येवं निरूपिते कालेऽपनेयः आत्मसमीपे नेतव्योमोचनीयइत्यर्थः देयं दानं देयमनतिक्रम्य यावद्देयं उद्यतोनियतः स्थापितइत्यर्थः। यावद्देयं उद्यतोयावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकालइत्यर्थः गोप्योरक्षणीयः। एवञ्चतुर्विधस्याधेर्विशेषमाह॥ ५८॥

आधिः प्रणश्येत् द्विगुणे धने यदि नमोच्यते।
काले कालकृतोनश्येत् फलभोग्योन नश्यति॥५९॥

प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधि रधमर्णेन द्रव्यदानेन न मोच्यते तदा नश्यत्यधमर्णस्य धनं प्रयोक्तुः स्वम्भवति । कालकृतः कृतकालः आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्व्वनिपातः स तु काले निरूपिते प्राप्ते नश्येत् द्वैगुण्यात्प्रागूर्द्धम्वा । फलभोग्यः फलं भोग्यं यस्यासौ फलभोग्यः क्षेत्रारामादिः स न कदाचिदपि नश्यति । कृत कालस्य गोप्यस्य भोग्यस्य च तत्कालातिक्रमे नाशउक्तः । काले कालकृतोनश्येदिति । अकृतकालस्य भोग्यस्य नाशाभावउक्तः फलभोग्योन नश्यतीति पारिशेष्यादाधिः प्रणश्येदित्येतदकृत कालगोप्याधिविषयमवतिष्ठते द्वैगुण्यातिक्रमेण निरूपित कालातिक्रमेणच विनाशे चतुर्दशदिवसप्रतीक्षणं कर्त्तव्यम् ॥

वृहस्पतिवचनात् । हिरण्ये द्विगुणीभूते पूर्णे काले कृता बधौ । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च । तदन्तरा धनन्दत्वा ऋणी बन्धमवाप्नुयादिति ॥

नन्वाधिः प्रणश्येदित्यनुपपन्नं । अधमर्णस्य स्वत्वनिवृत्ति हेतोर्दानविक्रयादेरभावात् । धनिनश्च स्वत्वहेतोः प्रतिग्रह क्रयादेरभावात् । मनुवचनविरोधाच्च । नचाधेः कालसंरोधा न्निसर्गोस्ति न विक्रयइति । कालेन संरोधः कालसंरोधश्चिर कालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न्न निसर्गोऽस्ति नान्यत्राधीकरणमस्ति । नच विक्रयः । एवमाधी करणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यतइति ।

च्यते। आधीकरणमेव लोके सोपाधिकः खलनिवृत्तिहेतुः। आधिस्वीकारस्य सोपाधिकः स्वत्वापत्तिहेतुः प्रसिद्धः तत्र धन द्विगुणे निरूपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिरुत्तमर्णस्य चात्यन्तिकं स्वत्वम्भवति। नच मनुवचनविरोधः यतोन लेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादिति भोग्याधिं प्रत्युत्येदमुच्यते। नचाधेः कालसंराधान्निसर्गोऽस्ति न विक्रयइति। भोग्यस्याधेश्चिरन्तन कालावस्थानेऽप्याधिकरणविक्रयनिषेधेन धनिनः स्वत्वन्नास्तीति इहाप्युक्तं फलभोग्योन नश्यतीति गोप्याधौ तु पृथगारम्भ मनुना न भोक्तव्योबलादाधिर्भुञ्जानो वृद्धिमुत्सृजेदिति। इहापि वक्ष्यते। गोप्याधिभोगे नो वृद्धिरिति। आधिः प्रणश्ये द्विगुणइति तु गोप्याधिं प्रत्युच्यतइति सर्व्वमविरुद्धम्॥ ५९॥

किञ्च गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते। नष्टोदेयोविनष्टश्च दैवराजकृतादृते॥६०॥

गोप्याधेस्ताम्रकटाहादेरुपभोगेन न वृद्धिर्भवति। अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या समयातिक्रमात्तथा सोपकारे उपकारकारिणि बलीवर्द्दताम्रकटाहादौ भोग्याधौ सवृद्धिकौ हापिते हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिरिति सम्बन्धः नष्टोविकृतिं गतस्ताम्रकटाहादिश्छिद्रभेदादिना पूर्व्ववत् कृत्वा

देयः तत्र गोप्याधिर्नष्टस्तत्पूर्ववत्कृत्वा देयः। उपभुक्तोऽपि चेद् वृद्धिरपि हातव्या भोग्याधिर्यदि नष्टः तदा पूर्ववत्कृत्वा देयः। वृद्धिसद्भावे वृद्धिर्वा हातव्या विनष्टश्चात्यन्तिकं नाशं प्राप्तः सोऽपि देये मूल्यादिद्वारेण तद्दाने सवृद्धिकं मूल्यं लभते यदि न ददाति तदा मूलनाशः विनष्टे मूलनाशः स्याद्दैवराजकृता दृतइति नारदवचनात्। दैवराजकृतादृते। दैवमग्न्युदक-देशोपप्लवादि। दैवकृतादिनाशादिना। तथा स्वापराधरहिता द्राजकृतात्। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्य मधमर्णेनाध्यन्तरम्वा यथाह। स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते आधिरन्योऽथ कर्त्तव्यो देयम्वाधनिने ऽधनमिति। तत्र स्रोतसापहृतइति दैवकृतोपलक्षणम्॥ ९०॥

अपिच। आधेः स्वीकरणात्सिद्धीरक्षमाणोप्यसारतां। यातश्चेदन्यआधेयोधनभाग्वाधनो भवेत्॥ ९१॥

आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादुपभोगादाधिग्रहण सिद्धिर्न साक्षिलिखनमात्रेण नाप्युद्देशमात्रेण॥

यथाह नारदः। आधिस्तु द्विविधः प्रोक्तोजङ्गमः स्थावर स्तथा। सिद्धिरस्योभयस्यापि भोगोयद्यस्ति नान्यथेति। अस्य च

फलम्। आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरेति। या स्वीकारान्ता क्रिया सा पूर्व्वा बलवती स्वीकाररहिता तु पूर्व्वापि न बलवतीति स चाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्य सारतामवित्ततएव सवृद्धिकमूल्यद्रव्यापर्य्याप्ततां गतस्तदाधिरन्यः कर्त्तव्यः। धनिने वा धनन्देयं रक्ष्यमाणोप्यऽसारता मितिवदताधिः प्रयत्नेन रक्षणीयोधनिनेति ज्ञापितं। आधिः प्रणश्येद्द्विगुणइत्यस्यापवादमाह ॥ ६१ ॥

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनं। सत्यङ्कारकृतन्द्रव्यं द्विगुणम्प्रतिदापयेत् ॥ ६२ ॥

चरित्रं शोभनाचरितं। चरित्रेण बन्धकं। चरित्रबन्धकं तेन यद्द्रव्यमात्मसात्कृतम्पराधीनं वा कृतं। एतदुक्तम्भवति। धनिनः स्वेच्छाप्रयत्नेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णमाल्पमेव द्रव्यमात्मसात्कृतं। यदि वाधमर्णस्य स्वेच्छाप्रयत्नेनाल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेव धनिनाधमर्णाधीनं कृतमिति तद्धनं नृपोवृद्ध्या सह दापयेत् अयमाशयः एवंरूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति किन्तु द्रव्यमेव द्विगुणन्दातव्यमिति। तथा सत्यङ्कारकृतं करणं भावे घञ् सत्यस्य कारः सत्यङ्कारः कारे सत्यागदस्येति मुम् सत्यङ्कारेण कृतं

सत्यङ्कारकृतं। अयमभिसन्धिः। यदा बन्धकार्पणसमय एवेत्थं परिभाषितं द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यम्। नाधिनाशइति तदा तद्विगुणन्दापयेत् इति अन्योऽर्थः। चरित्रमेव बन्धकञ्चरित्रबन्धकं। चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्व्वमुच्यते यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं। तत्र तदेव द्विगुणीभूतन्दातव्यन्नाधिनाशइति। आधिप्रसङ्गादन्यदुच्यते। सत्यङ्कारकृतमिति क्रयविक्रयादिव्यवस्थानिर्व्वाहनाय यदङ्गुलीयकादिपरहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणन्दातव्यं तत्रापि येनाङ्गुलीयकाद्यर्पितं सएवचेद्व्यवस्थातिवर्त्ती तेन तदेव हातव्यम्। इतरश्चेद्व्यवस्थातिवर्त्ती तदा तदेवाङ्गुलीयकादि द्विगुणञ्चतिदापयेदिति॥ ६२॥

किञ्च उपस्थितस्य मोक्तव्य आधिस्तेनोऽन्यथा भवेत्। प्रयोजके सति धनं कुले ऽन्यस्याधिमाप्नुयात्॥ ६३॥

धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्योधनिना वृद्धिलोभेन न स्थापयितव्यः अन्यथा अमोक्षणे स्तेनश्चौरवद्दण्ड्यो भवेत् असन्निहिते पुनः प्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं निधायाधमर्णः स्वीयं बन्धकं गृह्णीयात्। अथ प्रयोक्ताप्

सन्निहितस्तदाप्तास्च धनस्य ग्रहीतारोन सन्ति यदि वा असन्नि
हिते प्रयोक्तरि आधिविक्रयेण धनदित्साधमर्णस्य तत्र किं
कर्त्तव्यमित्यपेक्षित आह ॥ ६३ ॥

तत्कालकृतमूल्योवा तत्र तिष्ठेदवृद्धिकः ।

तस्मिन् काले यत्तस्याधेर्मूल्यन्तत्परिकल्प्य तत्रैव धनिनि
तमाधिं वृद्धिरहितं स्थापयेन्न ततऊर्द्धं धनं वर्द्धते यावद्धनी
धनं गृहीत्वा तमाधिं मुञ्चति यावद्वा तन्मूल्यद्रव्यमृणिने प्रवे
शयति यदा तु द्विगुणीभूतेऽपि धने द्विगुणन्धनमेव ग्रहीतव्यम्
नत्वाधिनाशइति विचारितमृणग्रहणकालएव तदा द्विगुणी
भूते द्रव्ये असन्निहिते वाधमर्णे धनिना किंकर्त्तव्यमित्यतआह
॥०॥

विना धारणकाद्वापि विक्रीणीत ससाक्षिकं ॥ ६४ ॥

धारणकादधमर्णाद्विना अधमर्णे असन्निहिते साक्षिभि
स्तदाप्तैस्च सह तमाधिं विक्रीय तद्धनं गृह्णीयाद्धनी वाशब्दो
व्यवस्थितविकल्पार्थः । यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने
धनमेव गृहीतव्यम् नत्वाधिनाशइति न विचारितम् । तदा

आधिप्रणश्येद्विगुणइत्याधिनाशः। विचारिते त्वयं पक्षइति। भोग्याधौ विशेषमाह ॥ ६४ ॥

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्यआधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६५ ॥

यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतन्तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने द्विगुणे धनिनः प्रविष्टे धनिनाधिर्मोक्तव्यः यदि वादावेवाधौ दत्ते द्विगुणीभूते द्रव्ये त्वयाधिर्म्मोक्तव्यइति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूत मृणन्तदाधौ भोगार्थे धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्या धिर्म्मोक्तव्यः। अधिकोपभोगे तदपि देयम्। सर्व्वथा सवृद्धिक मूल्यार्णापाकरणार्थाध्युपभोगविषयमिदं वचनम्। तमेनं चया धिमाचक्षते लौकिकाः यत्र तु वृद्ध्यर्थएवाध्युपभोगइति परि भाषां तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूल्यदानं तावदुपभुङ्क्ते एवाधिं एतदेव स्पष्टीकृतं ॥

वृहस्पतिना ऋणीबन्धमवाप्नुयात्। फलभोग्यं पूर्णकालं दत्वा द्रव्यञ्च सामकम्। यदि प्रकर्षितं तत्स्यात्तदा न धन भाग्धनी॥ ऋणी च न लभेद्बन्धं परस्परमतं विनेति। अस्यार्थः। फलभोग्यं यस्यासौ फलभोग्यः बन्धकआधिः सच द्विविधः स

वृद्धिकमूल्यापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च तत्र च यद्वृद्धिमूल्यापाकरणार्थं बन्धं पूर्वकालं पूर्णः कालो यस्यासौ पूर्णकालस्तमाप्नुयाद्धनी। यदा यद्वृद्धिकं मूल्यं फलद्वारेण धनिनः प्रविष्टन्तदा बन्धमवाप्नुयादित्यर्थः वृद्धिमात्रापकरणार्थन्तु बन्धं सामकं दत्वा प्राप्नुयाद्धनी । समं मूल्यं सममेव सामकं। अस्यापवादमाह । यदि प्रकर्षितं तस्यात्ततद्बन्धकं प्रकर्षित मतिशयितं वृद्धेरभ्यधिकफलं यदिस्यात्तदा न धनभाग्धनी। सामकं न लभेद्धनं मूल्यमदत्वैवर्णी बन्धमवाप्नुयादिति यावत्। अथाप्रकर्षितं तद्बन्धकं वृद्धयेऽप्यपर्याप्तन्तदा सामकं दत्वापि बन्धं लभेताधमर्णः वृद्धिशेषमदत्वैव लभतेत्यर्थः। पुनरुभयत्रापवादमाह परस्परमतन्विना उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे यदि प्रकर्षितमित्याद्युक्तं । परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूल्यदानन्तावदुपभुङ्क्ते धनी निकृष्टमपि मूलमाचदाने नैवाधमर्णो लभतइति ॥ ६५ ॥

॥ इति ऋणादानप्रकरणम् ॥

॥ उपनिधिं प्रत्याह ॥

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यन्तदौपनिधिकं प्रतिदेयं तथैवतत् ॥ ६६ ॥

निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि तत्स्थं

वासनस्थं यद्द्रव्यं रूपसङ्ख्यादिविशेषमनाख्यायाकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं किञ्चिभादर्प्यते स्थाप्यते तद्द्रव्यमौपनिधिकमुच्यते ॥

यथाह नारदः। असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादुपनिधिं निक्षेपं गणितं विदुरिति॥ प्रतिदेयन्तथैव तत् यस्मिन् स्थापितं तेनैव पूर्व्वमुद्रादिचिह्नितमर्पितन्तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम्। प्रतिदेयमित्यस्यापवादमाह ॥ ६६ ॥

न दाप्योपहृतं तत्तु राजदैविकतस्करैः।

तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वापहृतं नष्टं न दाप्योऽसौ यस्मिन्नुपहितं धनिनएव द्रव्यं। नष्टं यदि जिह्मकारितं न भवति ॥

यथाह नारदः। ग्रहीतुः सह योऽर्थेन नष्टोनष्टः सदायिनः। दैवराजकृते तद्वन्नचेत्तज्जिह्मकारितमिति। अस्यापवादः॥

भ्रेषश्चेन्मार्गिते दत्ते दाप्योदण्डञ्च तत्समम्॥ ६७॥

स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तर कालं यद्यपि राजादिभिर्भोगमात्रः संजातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने गृहीता दाप्योराज्ञे च तत्समं दण्डम्। भोक्तारमति दण्डमाह ॥ ६७ ॥

आजीवन् स्वेच्छया दण्ड्योदाप्यस्तं वापि सोदयं।

यः स्वेच्छया स्वाम्यननुज्ञयोपनिहितं द्रव्यमाजीवत्युपभुङ्क्ते व्यवहरति वा प्रयोगादिना लाभार्थमसावुपभोगानुसारेण च दण्डस्तच्चोपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारे सलाभं धनिने दाप्यः। वृद्धि प्रमाणञ्च।

कात्यायनेनोक्तम्। निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानोन चेद्दद्याद्वर्द्धते पञ्चकं शतमिति। एतच्च भक्षिते द्रष्टव्यं। उपेक्षाज्ञाननष्टे तु तेनैव विशेषोदर्शितः॥

भक्षितं सोदयं दाप्यः समन्दाप्यउपेक्षितं। किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितमिति। किञ्चिन्न्यूनमिति चतुर्थांशहीनं। उपनिधेर्धर्मान्याचितादिष्वतिदिशति ॥ ० ॥

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः॥६८॥

विवाहाद्युत्सवेषु वस्त्रालङ्कारादि याचित्वा नीतं याचितं।

यदेकस्य हस्ते निहितन्द्रव्यं तेनाप्यनुपस्थादन्यस्य हस्ते स्वामिने देहीति निहितन्तदन्वाहितं न्यासोनाम गृहस्वामिने दर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो गृहस्वामिने समर्पणीयमिति। समक्षन्तु समर्पणं निक्षेपः। आदिशब्देन सुवर्णकारादिहस्ते कटकादिनिर्म्माणाय न्यस्तस्य सुवर्णादेः प्रतिन्यासस्य च परस्पर प्रयोजनापेक्षायास्त्वयेदं मदीयं रक्षणीयं मयेदं त्वदीयं रक्ष्यतइति न्यस्तस्य ग्रहणं॥

यथाह नारदः। एषएव विधिर्दृष्टोयाचितान्वाहिता दिषु। शिल्पिषूपनिधौ न्यासे प्रतिन्यासेतथैव चेति। एतेषु याचितादिष्वयं विधिः। उपनिधेर्यः प्रतिदानादिविधिः सएव वेदितव्यः। इतिनिक्षेपप्रकरणम्॥ ९८॥

प्रमाणं लिखितभुक्तिः साक्षिणश्चेति कीर्त्तितमित्युक्तन्तत्र भुक्तिर्निरूपिता साम्प्रतं साक्षिस्वरूपं निरूप्यते। साक्षी च साक्षा दर्शनाच्छ्रवणाच्च भवति॥

यथाह मनुः। समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यतीति। स च द्विविधः। कृतोऽकृतश्च। साक्षित्वेन निरूपितः कृतः। अनिरूपितोऽकृतः तत्र कृतः पञ्चविधोऽकृतश्च षड्विधइत्येका दशविधः॥

यथाह नारदः। एकादशविधः साक्षी शास्त्रे दृष्टोमनी षिभिः कृतः पञ्चविधोज्ञेयः षड्विधोऽकृतउच्यतइति। तेषाञ्च भेदस्तेनैव दर्शितः लिखितः स्मारितश्चैव यदृच्छाभिज्ञएव च।

गूढस्तोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतइति। लिखितादी नाञ्च स्वरूपं॥

कात्यायनेनोक्तम्। अर्थिना स्वयमानीतोयोलेख्ये सन्नि वेश्यते। स साक्षी लिखितोनाम स्मारितः पत्रकादृतेइति। स्मारितः पत्रकादृतइत्यस्य विवरणमनेनैव कृतं॥

यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुनः। स्मार्य्यते ह्यर्थिना साक्षी स स्मारितइहोच्यते इति। यस्तु यदृच्छयागतः साक्षी क्रियते स यदृच्छाभिज्ञः। अनयोः पत्रानारूढत्वेऽपि भेदस्तेनैव दर्शितः॥

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः। द्वौ साक्षिणौ त्वलिखितौ पूर्व्वपक्षस्य साधकाविति॥

तद्यथा। अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते स्थितोगूढोगूढसाक्षी सउच्यतइति तथा साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते। श्रवणाच्छ्रावणाद्दापि स साक्ष्यु त्तरसंज्ञितइति षड्विधस्याप्युक्तस्य भेदः॥

नारदेन दर्शितः ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारि णाम्। कार्य्येष्वधिकृतोयः स्यादर्थिना प्रहितश्च यः॥ कुल्याकुल विवादेषु विज्ञेयास्तेपि साक्षिणइति। प्राड्विवाकग्रहणं लेखक सभ्योपलक्षणार्थं। लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्व्वशः। नृपे पश्यति तत्कार्य्यं साक्षिणस्समुदाहृताइति ते साक्षिणः कीदृशाः कियन्तश्च भवन्तीत्यतआह॥ ६८॥

तपस्विनोदानशीलाः कुलीनाः सत्यवादिनः ।
धर्म्मप्रधानाऋजवः पुत्रवन्तोधनान्विताः ॥ ६९ ॥
त्र्यवराः साक्षिणोज्ञेयाः श्रौतस्मार्त्तक्रियापराः ।
यथा जाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः॥ ७० ॥

तपस्विनस्तपःशीलाः दानशीलादाननिरताः कुलीनाः महाकुलप्रसूताः सत्यवादिनः सत्यवदनशीलाः धर्म्मप्रधानाः नार्थकामप्रधानाः ऋजवः अकुटिलाः पुत्रवन्तः पुत्रान्विताः धनान्विताः बहुसुवर्णादिधनयुक्ताः श्रौतस्मार्त्तक्रियापराः नित्यनैमित्तिकानुष्ठानरताः एवम्भूताः पुरुषाः त्र्यवराः साक्षिणोभवन्ति । त्रयः अवरा न्यूना येषान्ते त्र्यवरास्त्रिभ्यो ऽर्व्वाञ्च भवन्ति परतस्तु यथाकामम्भवन्तीत्यर्थः जातिमनतिक्रम्य यथाजातिजातयोमूर्द्धावसिक्तादयः अनुलोमजाः प्रतिलोमजाश्च । तत्र मूर्द्धावसिक्तानां मूर्द्धावसिक्ताः साक्षिणो भवन्ति । एवमम्बष्ठादिष्वपि द्रष्टव्यम् । वर्णमनतिक्रम्य यथा वर्णं । वर्णाब्राह्मणादयः । तत्र ब्राह्मणानां ब्राह्मणाएवोक्तलक्षणाउक्तसङ्ख्काः साक्षिणोभवन्ति । एव क्षत्रियादिष्वपि द्रष्टव्यम्। तथा स्त्रीणां साक्ष्यं स्त्रियश्च कुर्य्युः ॥

यथाह मनु.। स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युरिति सजाति सवर्णासम्भवे सर्व्वे मूर्द्धावसिक्तादयोब्राह्मणादयश्च सर्व्वेष्वेव

मूर्द्धावसिक्तादिषु ब्राह्मणादिषु च यथासम्भवं साक्षिणोभवन्ति उक्तलक्षणानां साक्षिणामसम्भवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणोवक्तव्याः ते च पञ्चविधा ॥

नारदेन दर्शिताः असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतोभेदात्स्वयमुक्तिर्मृतान्तरमिति । के पुनर्वचनादसाक्षिणइत्यत आह ॥ ७० ॥

श्रोत्रियास्तापसावृद्धाये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥ ७१ ॥

इतितापसावानप्रस्थाः । आदिशब्देन पित्रा विवदमाना दीनां ग्रहणं ॥

यथाह शङ्खः । पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्था असाक्षिणइति दोषादसाक्षिणोदर्शिताः ॥

स्तेनाः साहसिकाश्चण्डाकितवावञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्यन्न विद्यतइति चण्डाः कोपनाः कितवाद्यूतकृतः भेदादसाक्षिणाञ्च स्वरूपन्तेनैव दर्शितं ॥

साक्षिणां लिखितानाञ्च निर्दिष्टानाञ्च वादिनाम् । तेषामेकोन्यथावादी भेदात्सर्वे न साक्षिणइति । तथा स्वयमुक्तिस्वरूपस्तोक्तम् ॥

स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य योवदेत्। सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हतीति। मृतान्तरस्यापि स्वयमुक्तम्॥

योर्थः श्रावयितव्यः स्यात्तस्मिन् सति चार्थिनि। क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरइति। येनार्थिना प्रत्यर्थिना वा साक्षिणां योर्थः श्रावयितव्योभवेत् यूयमत्रार्थे साक्षिणइति। तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृते ऽर्थे चानिवेदिते साक्षी क्व कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति। यत्तु मुमूर्षुणा सुस्थेन वा पित्रा पुत्रादयः श्राविताः अस्मिन्नर्थे अमी साक्षिणइति। तत्र मृतान्तरोपि साक्षी॥

यथाह नारदः। मृतान्तरोर्थिनि प्रेते मुमूर्षुश्राविताहृते।

तथा। श्रावितोनातुरेणापि यस्त्वर्थोधर्मसंहितः। मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वाहितादिषु॥ तानेतान् साक्षिणो दर्शयति॥ ७१॥

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः। रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः॥ ७२॥

पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः। साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः॥ ७३॥

स्त्री प्रसिद्धा बालोऽप्राप्तव्यवहारः। वृद्धोऽशीतिकावरः वृद्धग्रहणं वचननिमित्तानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम्। कितवोऽक्षदेवी। मत्तः पानादिना उन्मत्तो ग्रहाविष्टः। अभिशस्तः। अभियुक्तो ब्रह्महत्यादिना। रङ्गावतारी चारणः पाषण्डिनो निर्ग्रन्थिप्रभृतयः कूटकृत् कपटलेख्यादिकारी विकलेन्द्रियः श्रोत्रादिरहितः पतितः ब्रह्महादिः। आप्तः सुहृत् अर्थसम्बन्धी विप्रतिपद्यमानार्थसम्बन्धी सहायएककार्य्यः रिपुः शत्रुः तस्करस्तेनः साहसी स्वबलावष्टम्भकारी दृष्टदोषो दृष्टवितथवचनः। निर्धूतो बन्धुभिस्त्यक्तः। आदिशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् एते स्त्रीबालादयः साक्षिणोन भवन्ति। अवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह॥७२॥

उभयानुमतः साक्षी भवत्येकोऽपि धर्म्मवित्।

ज्ञानपूर्व्वकं नित्यनैमित्तिकधर्म्मानुष्ठायी धर्म्मवित्स एकोप्युभयानुमतश्चेत्साक्षी भवति अपिशब्दबलात् द्वावपि। यद्यपि श्रौतस्मार्त्तक्रियापरा इत्यवराणामपि धर्म्मवित्त्वसमानं। तथापि तेषामुभयानुमत्याभावेऽपि साक्षित्वम्भवत्येव कस्य

द्वयोर्व्वाभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् व्यवस्थापणं।
तपस्विनोदानशीलाद्व्यस्यापवादमाह॥०॥

सर्व्वः साक्षी संग्रहणे चौर्य्ये पारुष्यसाहसे॥७४॥

संग्रहणादीनि वक्ष्यमाणलक्षणानि। तेषु सर्व्वे वचननिषिद्धा स्तपःप्रभृतिगुणरहितास्व साक्षिणोभवन्ति। दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिस्वाचापि साक्षिणोन भवन्ति। सत्या भावादितिहेतोरत्रापि विद्यमानत्वात्। मनुष्यमारणञ्चौर्य्यं म्परदाराभिमर्शनं। पारुष्यमुभयञ्चेति साहसं स्याच्चतुर्व्विध मिति वचनात् यद्यपि स्त्रीसंग्रहणचौर्य्यपारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साह सत्वं। रहसि क्रियमाणानान्तु संग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम्। साक्षिश्रावणमाह॥७४॥

साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान्।

अर्थिप्रत्यर्थिसन्निधौ साक्षिणः समवेतान्॥
नासमवेताः पृष्टाः प्रब्रूयुरिति गौतमवचनात्। वक्ष्यमाणं श्रावयेत्। तत्रापि कात्यायनेन विशेषोदर्शितः॥

सभान्त: साक्षिण: सर्व्वानर्थिप्रत्यर्थिसन्निधा । प्राड्विवाको नियुञ्जीत विधिनानेन सान्त्वयन् ॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् । उदङ्मुखान् प्राङ्मुखान्वा पूर्व्वाह्णे वै शुचिः शुचीन् ॥ आहूय साक्षिण: पृच्छेन्नियम्य शपथैर्भृशम् । समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥ तथा ब्राह्मणादिषु श्रावणे मनुना नियमोदर्शित: ॥

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोवीजकाञ्चनै र्वैश्यं शूद्रं सर्व्वैस्तु पातकैरिति ब्राह्मणं अन्यथा ब्रुवत: सत्यन्ते नश्यतीति शापयेत् । क्षत्रियं वाहनायुधानि तव विफलानीति । गोवीजकाञ्चनानि तव विफलानि भविष्यन्तीति वैश्यं शूद्र मन्यथा ब्रुवतस्तव सर्व्वाणि पातकानि भविष्यन्तीति शापयेत् । अत्रापवादस्तेनैव दर्शित: ॥

गोरक्षकान्वाणिजकान् तथा कारुकुशीलवान् । प्रेष्यान्वा र्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेदिति । विप्रग्रहणं क्षत्रिय वैश्ययोरुपलक्षणार्थम् । कुशीलवागायना: प्रतिवादिना साक्षि दूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु वाक्यादिषु तथैव निर्णय: । अयोग्येषु तदचनात् लोकतस्तु निर्णयोन साक्ष्यन्तरेणेति नाम वक्ष्या । यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदासौ सारानुसारेण दण्ड्य: अथ साधयति तदा न ते साक्षिण: ॥

यथाह । अबाधयन् इमं हार्थोद्गूषणं साक्षिणं स्फुटम् । भाविते साक्षिणोवर्ण्याः साक्षिधर्म्मनिराकृतारति । उद्दिष्टेषु च सर्व्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितोभवति ॥

जितः च विनयन्दाप्यः शास्त्रदृष्टेन कर्म्मणा । यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितइति स्मरणात् । साकाङ्क्षश्चेत् क्रियान्तरमवलम्बेतेत्यभिप्रायः कथं श्रावयेदित्यतआह ॥ ० ॥

ये पातककृतां लोकामहापातकिनान्तथा ॥७५॥
अग्निदानाञ्च ये लोकाये च स्त्रीबालघातिनाम् ॥
स तान्सर्व्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥७६॥
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतं । तत्सर्व
न्तस्य जानीहि यम्पराजयसे मृषा ॥ ७७॥

पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबाल घातिनाञ्च ये लोकास्तान्सर्व्वानवाप्नोति यः साक्ष्यमनृतं वदेदिति । तथा जन्मान्तरशतैर्यत्सुकृतं कृतन्तत्सर्व्वन्तस्य भवति । यस्ते अनृतवदनेन पराजितोभवतीति श्रावयेदिति सम्बन्धः एतच्च शूद्रविषयं द्रष्टव्यम् । शूद्रं सर्व्वैस्तु पातकैरिति शूद्रे सर्व्वपातकश्रावणस्य विहितत्वात् । गोरक्षकद्विजविषयश्च

गौरवख्यापनकानीत्युक्तत्वात्। अन्यथानेकजन्मार्ज्जितसुकृतक्रमणस्य महापातकादिष्वसमानैश्चानृतवचनमात्रेणानुपपत्तेः। साक्षिसन्त्रासार्थमिदमुच्यते॥

यथाह नारदः। पुराणैर्धर्म्मवचनैः सत्यमाहात्म्यकीर्त्तनैः। अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमानिति। यदा तु श्राविताः साक्षिणः कथञ्चिन्न ब्रूयुस्तदा किं कर्त्तव्यमित्यत आह॥ ७७॥

अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकं। राज्ञा सर्व्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि॥ ७८॥

यः साक्ष्यमङ्गीकृत्य श्रावितः सन् कथञ्चिन्न वदति राज्ञा सर्व्वं सवृद्धिकमृणमर्थिने दाप्यः सदशबन्धकं दशमांशसहितं दशमांशश्च राज्ञो भवति। राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतमित्युक्तत्वात् एतच्च षट्चत्वारिंशकेऽह्नि प्राप्ते वेदितव्यम्। ततोऽर्व्वाग्वदन्न दाप्यः इदञ्च व्याध्याद्युपद्रवरहितस्य॥

यथाह मनुः। त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः। तदृणं प्राप्नुयात्सर्व्वं दशबन्धञ्च सर्व्वतः इति। अगद इति राजदैवोपद्रवविरहोपलक्षणं। यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दोषान्तरमाह॥ ७८॥

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥ ७९॥

यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति नाङ्गीकरोति स कूटसाक्षिणां तुल्यः पापैः कृत्वा दण्डेन च। कूटसाक्षिणां दण्डञ्च वक्ष्यति कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्त्तनीयः। कृतोऽपि वा कौटसाक्ष्ये विदिते निवर्त्तनीयः॥

यथाह मनुः। यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत्कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेदिति। साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह॥ ७९॥

द्वैधे बहूनां वचनं समेषु गुणिनां तथा। गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः॥ ८०॥

साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम्। समेषु समसङ्ख्येषु द्वैधे ये गुणिनस्तेषां वचनं प्रमाणम्। यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसम्पन्नास्तेषां वचनं ग्राह्यं। यत्र गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम्। उभयानुमतः साक्षी भवत्येकोऽपि धर्मविदिति गुणातिशयस्य

मुख्यत्वात्। यत्तु भेदादसाक्षिवदित्युक्तम् ।तत्सर्व्वसाक्षिवाक्प्रमाणविशेषविषयम्। साक्षिभिस्तु कथमुक्ते जयः कथम्पराजयः इत्यतआह ॥ ८० ॥

यस्योचुः साक्षिणः सत्याम्प्रतिज्ञां स जयी भवेत्
अन्यथावादिनोयस्य ध्रुवस्तस्य पराजयः ॥ ८१ ॥

यस्य वादिनः प्रतिज्ञां द्रव्यजातिसङ्ख्यादिविशिष्टां साक्षिणः सत्याम्वदन्ति सत्यमेवं जानीमोवयमिति स जयी भवति यस्य पुनर्व्वादिनः प्रतिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य पराजयोध्रुवोनिश्चितः। यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणोन प्रतिपादयन्ति तत्र प्रमाणान्तरेण निर्णयः कार्य्यः न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः स्वभावोक्तमेव वचनं ग्राह्यम्॥

यथाह स्वभावोक्तं वचस्तेषं ग्राह्यं यद्दोषवर्ज्जितम्। उक्ते तु साक्षिणा राज्ञा न प्रष्टव्याः पुनः पुनरिति। अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयइत्यस्यापवादमाह॥ ८१ ॥

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः।
द्विगुणावान्यथा ब्रूयुः कूटाः स्युः पूर्व्वसाक्षिणः ॥८२॥

पूर्व्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिप्राये प्रतिज्ञार्थ वैपरीत्येनाभिहिते सत्यन्ये पूर्व्वेभ्योगुणवत्तमाः द्विगुणावा अन्यथा प्रतिज्ञार्थानुगुणेन साक्ष्यं ब्रूयुः तदा पूर्व्वे साक्षिणः कूटा मिथ्यावादिनोभवेयुः । नन्वेतदनुपपन्नम् । अर्थिप्रत्यर्थिसभ्य सभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निर्णीते प्रमाणा न्तरान्वेषणे अनवस्थादोषप्रसङ्गात् ॥

निर्णिक्ते व्यवहारे तु प्रमाणमफलम्भवेत् । लिखितं साक्षिणो वापि पूर्व्वमावेदितन्न चेत् । यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णिक्तव्यवहाराणां प्रमाणमफलन्तथेति । नारद वचनाच्च । उच्यते । यदार्थी प्रतिज्ञातार्थस्यान्तरात्मसाक्षित्वे नानाविष्कृतदोषाणामपि साक्षिणाम्वचनमर्थविसम्वादित्वेना प्रमाणं मन्यमानः साक्षिष्वपि दोषङ्कल्पयति । तदा प्रमाणा न्तरान्वेषणं केन वार्य्यते । उक्तञ्च । यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनइति यथा चक्षुरादिकरण दोषानध्यवसायेऽप्यर्थविसम्वादात्तज्जनितस्य ज्ञानस्याप्रामा ण्येन करणदोषकल्पना । तथेहापि साक्षिपरीक्षातिरेकेण वाक्परीक्षोपदेशाच्च साक्षिभिर्भाषितं वाक्यं सह सभ्यैःपरीक्षये दिति कात्यायनेनाप्युक्तम् ॥

यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनं । शुद्धाच्च वाक्याद्यः शुद्धस्स शुद्धोऽर्थ इतिस्थितिरिति । क्रियासाक्षि लक्षणा नार्थिसम्बन्धिनोनाशादितिन्यायात् यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्त्तव्यं । वाक्यशुद्धिश्च

सत्यार्थप्रतिपादनेन सत्येन शुध्यति साक्ष्यमिति स्मरणात्। एवं शुद्धायाः क्रियायाः शुद्धवाक्याच यः शुद्धोऽवगतोऽर्थः स शुद्धः तथाभूतइति स्थितिरीदृशी मर्य्यादा । न्यायविदां कारणदोषबाधकप्रत्ययाभावे सत्यवितथएवार्थइत्यर्थः । ननु स्वयमर्थिना प्रमाणीकृतात्साक्षिणोऽतिक्रम्य कथं क्रियान्तरप्रमाणीक्रियते नैव दोषः ॥

यतः। क्रियां बलवतीमुक्ता दुर्बलां योऽवलम्बते। स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियामिति। कात्यायनेन जयावधारणोत्तरकालं क्रियान्तरपरिग्रहनिषेधाज्जयावधारणात् प्राक् क्रियान्तरपरिग्रहोदर्शितः। नारदेनापि ॥

निर्णिक्ते व्यवहारे तु प्रमाणमफलम्भवेदिति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि। तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये सपरितुष्यता क्रियान्तरमङ्गीकर्त्तव्यमिति स्थितं एवं स्थिते यदभिहितवचनेभ्यः साक्षिभ्योगुणवत्तमाद्विगुणावा पूर्व्वनिर्दिष्टाश्चसन्निहिताः साक्षिणः सन्ति तदा त एव प्रमाणीकर्त्तव्याः ॥

स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकमित्यस्य सर्व्वव्यवहारविषयत्वात् ॥

निर्णिक्ते व्यवहारे तु प्रमाणमफलम्भवेत्। लिखितं साक्षिणो वापि पूर्व्वमावेदितं नचेदिति नारदवचनाच पूर्व्वनिर्दिष्टानामसम्भवे त्वनिर्दिष्टा अपि तथाविधाः साक्षिणएव प्रमाणं न दिव्यं ॥

सम्भवे साक्षिणामाप्तो दैविकीं वर्जयेत्क्रियामिति स्मरणात् तेषामसम्भवे दिव्यप्रमाणं कर्त्तव्यम्। अतः परमपरितुष्यता प्यर्थिना न प्रमाणान्तरमन्वेषणीयं यमवचनादिति परिसमापनीयोव्यवहारः। यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसम्वादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेना परितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात्सप्ताहा वधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्त्तव्यम्। तत्र दोषावधारणे साक्षिणो विवादास्पदीभूतमृणन्दाप्याः सारानु सारेण दण्डनीयाश्च। अथ दोषानवधारणन्तदा प्रत्यर्थिना तावता सन्तोष्टव्यम्॥

यथाह मनुः। यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्योदमश्च स इति। एतच्च यस्योचुः साक्षिणः सत्याम्प्रतिज्ञां स जयी भवेदित्यस्यापरितुष्य त्प्रत्यर्थिविषये ऽपवादोद्रष्टव्यः। केचिदुक्तेऽपि साक्षिभिः साक्ष्ये इत्येतद्वचनमर्थिना निर्द्दिष्टेषु साक्षिष्वर्थनुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान्वा अन्यान् साक्षिणः पूर्व्वोक्तविपरीतं सम्वादयति तदा पूर्व्ववादिनः साक्षिणः कूटा इतिव्याचक्षते। तदसत् प्रत्यर्थिनः क्रियानुपपत्तेः तथाह्यर्थी नाम साध्यस्यार्थस्य निर्द्देष्टा तत्प्रतिपक्षतदभाववादी प्रत्यर्थी तत्राभावस्य भावसिद्धिसापेक्षसिद्धत्वाद्भावस्य वा भावसिद्धि निरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम्। अभावस्य स्वरूपेण

साध्यादिप्रमेयत्वाभावात्। अतश्चार्थिनएव क्रिया पुनः अपि चोत्तरानुसारेण सर्व्वैव क्रिया नियता स्मर्य्यते॥

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियां। मिथ्योक्तौ पूर्व्ववादी तु प्रतिपत्तौ न सा भवेदिति नचैकस्मिन् व्यवहारे द्वयोः क्रिया॥

नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। इतिस्मरणात्। तस्मात्प्रतिवादिनः साक्षिणोगुणवत्तमाद्विगुणावान्यथा ब्रूयुरित्यनुपपन्नं। अथ मतं यत्र द्वावपि भावप्रतिज्ञावादिनौ मदीयमिदन्दायादप्राप्तं मदीयमिदन्दायादप्राप्तमिति प्रतिज्ञावादिनोः पूर्व्वापरकालविभागानाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणोग्राह्या इत्याकाङ्क्षायाम्॥

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्व्वपक्षोभवेद्यस्य भवेयुस्तस्य साक्षिणइतिवचनेन यः पूर्व्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थितेः। तस्यापवादमाह उक्तेऽपि साक्षिभिः साध्यइति अतश्च पूर्व्वोत्तरयोर्व्वादिनोः समसङ्ख्येषु समगुणेषु साक्षिषु सत्सु पूर्व्वं वादिनः साक्षिणः प्रष्टव्याः यदातूत्तर साक्षिणोगुणवत्तमाद्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः। एवञ्च नाभावस्य साध्यताउभयोरपि भाववादित्वाच्चतुर्व्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणेन क्रियाव्यवस्था। एकस्मिन् व्यवहारे यथैकस्यार्थिनः क्रियाद्वयं परमते तथा

वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति तदप्याचार्य्यो नानु मन्यते। उक्तेऽपि साक्षिभिः साक्ष्य इत्यपि शब्दादर्थात्प्रकरणाद्वा स्यार्थस्यानवगमादित्यलं प्रसङ्गेन। कूटसाक्षिणो दर्शितास्तेषां दण्डमाह॥ ८२॥

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा।
विवादाद्द्विगुणन्दण्डं विवास्यो ब्राह्मणः स्मृतः॥८३॥

यो धनदानादिना कूटान् साक्षिणः करोति स कूटकृत् साक्षिणश्च ये तथा कूटास्ते विवादाद्विवादपराजये यो दण्ड स्तस्य तचोक्तस्तं दण्डं द्विगुणं पृथक् पृथक् एकैकशो दण्डनीयाः ब्राह्मणश्च विवास्यो राष्ट्रान्निर्व्वास्योन दण्ड्यः। एतच्च लोभादि कारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यं। लोभादिकारण विशेषपरिज्ञाने अभ्यासे च मनुनोक्तम्॥

लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्व्वन्तु साहसम्। भयाद्वै मध्यमो दण्ड्यो मैत्यात्पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्व्वं क्रोधात्तु त्रिगुणम्परम्। अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव चेति। तत्र लोभो लिप्सा मोहो विपर्य्ययज्ञानं भयं सन्त्रासः मैत्री स्नेहातिशयः कामः स्त्रीव्यतिकराभिलाषः क्रोधोऽमर्षः अज्ञान मस्फुटज्ञानम् बालिश्यं ज्ञानानुत्पादः सहस्रादिषु ताम्रिकाः पणा गृह्यन्ते॥

तथा काटसाद्यन्तु कुर्व्वाणान् चौरवर्णान् धार्म्मिकोनृपः प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेदिति। एतच्चाभ्यास विषयम्। कुर्व्वाणानिति वर्त्तमानकालनिर्द्देशात्। चौरवर्णान् क्षत्रियादीन् पूर्व्वोक्तन्दण्डयित्वा प्रवासयेन्मारयेत्। अयंशब्दो प्रवासशब्दस्य मारणे प्रयोगादस्य मार्थशास्त्ररूपत्वात्। तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनञ्च।कोटसाक्ष्य विषयानुसारेण द्रष्टव्यम् ब्राह्मणन्तु दण्डयित्वा विवासयेत्स्व राष्ट्रान्निष्कासयेत्। यद्वा। विवासयेद्वाससोविगतोविवासाः। विवासङ्करोतीति । निचिह्नतेनाविष्टवत्प्रातिपदिकस्येति टि लोपे रूपम्। नग्नो कुर्य्यादित्यर्थः । अथवा वसत्यस्मिन्निति वासोगृहं विवासयेद्भग्नगृहं कुर्य्यादितियावत् । ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च तत्र तत्रोक्तोर्थ दण्डएव अभ्यासे त्वर्थदण्डोविवासनञ्च। तत्रापि जातिद्रव्यानु बन्धाद्यपेक्षया विवासनन्नग्नीकरणं गृहभङ्गोदेशान्निर्व्वासन ञ्चेति व्यवस्था द्रष्टव्या।लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे चाल्पविषये कोटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव। महाविषये तु देशान्निर्व्वासनमेवाचाप्यभ्यासे सर्व्वेषामेव मनूक्तं द्रष्टव्यम्। नच ब्राह्मणस्यार्थदण्डोनास्तीति वक्तव्यम्। अर्थ दण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे नग्नीकरण गृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावोवा प्रसज्येत॥

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्व्वतां। शारीरं धनसंयुक्तं दण्डं धर्म्म्यं प्रकल्पयेदिति स्मरणाच। तथा चतुर्थं ब्राह्मणो दण्डेऽगुप्तां विप्रां बलाद्व्रजन्निति स्मरणात्। यत्तु मनुवचनं। त्रयाणां वर्णानां धनापहारबधबन्धनक्रियाविवासनाङ्ककरणं ब्राह्मणस्येति। तत्र धनापहारः सर्व्वस्वापहारोविवक्षितोबध साहचर्य्यात्॥

शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्त्तितः। काकिण्यादिस्त्वर्थदण्डः सर्व्वस्वान्तस्तथैवचेति। बधसर्व्वस्वहरणयोः सहपाठात्। यदप्युक्तम्। राष्ट्रादेनं वहिः कुर्य्यात्समग्रधन मक्षतमिति तत्प्रथमसाहसविषयम्। न सर्व्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिदपि भवति॥

न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वपि स्थितमिति सामान्येन मनुस्मरणात्। तथा॥

यद्ब्राह्मणबधाद्भूयोनाधर्म्मोविद्यते भुवि। तस्मादस्य बधं राजा मनसापि नचिन्तयेदिति॥ ८३॥

अपिच। यः साक्ष्यश्रावितोन्येभ्योनिह्नुते तत्तमोवृतः। स दाप्योष्टगुणन्दण्डं ब्राह्मणन्तु विवासयेत्॥ ८४॥

यस्तु साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन्निगदनकाले तमोवृतो रागाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यः

साक्षित्वं निह्नुते नाहमत्र साक्षी भवामीति स विवादपराजये योदण्डस्तं दण्डमष्टगुणं दाप्यः। ब्राह्मणं पुनरष्टगुणद्रव्य दण्डदानासमर्थं विवासयेत्। विवासनं नग्नीकरणगृहभङ्गदेश निर्व्वासनलक्षणं विषयानुसारेण द्रष्टव्यम्। इतरेषां त्वष्टगुण द्रव्यदण्डासम्भवे स्वजात्युचितकर्म्मकरणनिगडबन्धनकारा गृहप्रवेशादि द्रष्टव्यम्। एतच्च पूर्व्वश्लोकेऽप्यनुसर्त्तव्यं। यदा सर्व्वे साक्ष्यं निह्नुवते तत्र सर्व्वे समानदोषाः। यदा तु साक्ष्यमुक्त्वा पुनरन्यथावदन्ति तदानुबन्धाद्यपेक्षया दण्ड्याः॥

यथाह कात्यायनः। उक्त्वान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विता इति। न चान्येनोक्ताः साक्षिणोऽन्येन रहस्य नुसर्त्तव्याः॥

यथाह नारदः। न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः। भेदयेच्चैव नान्येन हीयेतैवं समाचरन्निति। साक्षिणामवचन मसत्यवचनञ्च सर्व्वत्र प्रतिषिद्धम्। तदपवादार्थमाह॥ ८४॥

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।

यत्र वर्णिनां शूद्रविट्क्षत्रियविप्राणां सत्यवचनेन वधः सम्भाव्यते। तत्र साक्ष्यनृतं वदेत्। सत्यन्नवदेत्। अनेन च सत्य वचनप्रतिषेधेन साक्षिणः पूर्व्वप्रतिषिद्धमसत्यवचनञ्चाभ्यनु ज्ञायते। यत्र शङ्काभियोगादौ सत्यवचने वर्णिनोवधोऽनृत

वचनेन कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते । यत्र तु सत्य वचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वध स्तदा तूष्णीं भावाभ्यनुज्ञा राज्ञा यदनुमन्यते । अथ राजा कथमप्यकथनेन मुञ्चति । तदा भेदादसाक्षित्वं कर्त्तव्यम् । तस्याप्यसम्भवे सत्यमेव वेदितव्यम् । असत्यवचने वर्णिवधदोषो सत्यवचनदोषस्य सत्यवचने तु वर्णिवधदोषएव तत्र च यथा शास्त्रं प्रायश्चित्तङ्कर्त्तव्यम् तत्रानृतवचने तूष्णीं भावे च शास्त्रा भ्यनुज्ञया प्रत्यवायाभावइत्यतआह ॥ ० ॥

तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतोद्विजैः ॥ ८५ ॥

तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय सारस्वतश्चरुर्द्विजैरेकैकशोनिर्व्वाप्यः कर्त्तव्यः । सरस्वती देवता ऽस्येति सारस्वतः । अनवस्रावितान्तरूष्मपक्वोदने चरुशब्दः प्रसिद्धः । इहायमभिसन्धिः । साक्षिणामनृतवचनमवचनञ्च यन्निषिद्धन्तदिहाभ्यनुज्ञातम् । यत्तु नानृतं वदेत् । अब्रुवन् विब्रुवन्वापि नरोभवति किल्विषीति सामान्येनानृतवचनमवचन निषिद्धन्तदतिक्रमनिमित्तमिदम्प्रायश्चित्तम् नच मन्तव्यं साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचना वचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादवस्थ्यादस्य

नुज्ञावचनमनर्थकमिति। यतः साक्ष्यनृतवचनावचनयोर्भूयान् प्रत्यवायः साधारणानृतवचनावचनयोरल्पीयानित्यर्थवदभ्य नुज्ञावचनम्। यद्यपि भूयसः प्रत्यवायस्य निवृत्त्यानुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र तथापीहाभ्यनुज्ञानु वचनाच्च भूयोनिवृत्त्याल्पीयानप्यानुषङ्गिकोपि प्रत्यवायोन निवर्त्ततइति गम्यते एतदेवान्यत्र प्रश्नेषु वर्णिवधाज्ञया त्यान्याद्दीनामनृतवचनाभ्यनुज्ञानं वेदितव्यं नच तत्र प्राय श्चित्तमस्ति प्रतिषेधान्तराभावात्। निमित्तान्तरेण कालान्तरेर्थतत्त्वावगमेपि साक्षिणामन्येषाञ्च दण्डाभावोऽस्मादेव वचनादवगम्यत इति॥ इतिसाक्षिप्रकरणम्॥ ८५॥

भुक्तिसाक्षिणौ निरूपितौ साम्प्रतं लेख्यं निरूप्यते। तत्र लेख्यं द्विविधं शासनं जानपदञ्चेति। शासनं निरूपितं जानपदमभि धीयते। तच्च द्विविधम्। स्वहस्तकृतमन्यकृतञ्चेति। तत्र स्वहस्त कृतमसाक्षिकं। अन्यकृतं ससाक्षिकं। अनयोश्च देशाचारानु सारेण प्रामाण्यं॥

यदाह नारदः। लेख्यन्तु द्विविधं ज्ञेयं स्वहस्तान्यकृतन्तथा। असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोरिति। तत्रान्यकृत माह॥

यः कश्चिदर्थोनिष्णातः स्वरुच्या तु परस्परम्।
लेख्यन्तु साक्षिमत्कार्य्यन्तस्मिन्धनिकपूर्व्वकम्॥ ८६॥

धनिकाधमर्णयोर्य्योर्थोहिरण्यादिः परस्परं स्वरुच्या कृतया कालेनैतावद्देयमितीयतीच प्रतिमासं वृद्धिरिति निष्पन्नोव्यवस्थितः तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्वनिर्णयार्थं लेख्यम्। साक्षिमदुक्तलक्षणं साक्षियुक्तम्। धनिकः पूर्व्वो यस्मिन् तद्धनिकपूर्व्वकम्। धनिकनामलेखनपूर्व्वकमिति यावत्कार्य्यङ्कर्त्तव्यम्। उक्तलक्षणाः साक्षिणोवा कर्त्तव्याः॥

कर्त्रातु यत्कृतं कार्य्यं सिद्ध्यर्थन्तस्य साक्षिणः। प्रवर्त्तन्ते विवादेषु स्वकृतं वाप्यलेख्यकमिति स्मरणात्॥ ८६॥

अपिच। समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः। सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्॥ ८७॥

समा सम्वत्सरः। मासश्चैत्रादिस्तदर्द्धः पक्षः शुक्लः कृष्णो वा अहस्तिथिः प्रतिपदादिः। नाम धनिकाधमर्णयोः। जातिः ब्राह्मणादिः। स्वगोत्रं वाशिष्ठादिगोत्रमेतैः समादिभिश्चिह्नितं। तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठइति। आत्मीयपितृनाम धनिकर्णिकपितृनाम। आदिग्रहणाद्द्रव्यजातिसङ्ख्याचारादेर्ग्रहणम्। एतैश्चिह्नितं लेख्यङ्कार्य्यमिति गतेन सम्बन्धः॥ ८७॥

किञ्च। समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्। मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितं ॥८८॥

धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितः तस्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो नामात्मीयं स्वहस्तेनास्मिंल्लेख्ये यदुपरि लेखितन्तन्ममामुकपुत्रस्य मतमभिप्रेतमिति निर्वेशयेत्पत्रे विलिखेत् तथा॥ ८८॥

साक्षिणश्च स्वहस्तेन पितृनामकपूर्व्वकम्। अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥ ८९॥

तस्मिन् लेख्ये ये साक्षिणो लिखिताः तेऽप्यात्मीयपितृनामलेखनपूर्व्वकमस्मिन्नर्थे अहममुको देवदत्तः साक्षीति स्वहस्तेनैकैकशो लिखेयुस्ते च समाः सङ्ख्यातो गुणतश्च कर्त्तव्याः। यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाऽधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्व्वसाक्षिसन्निधौ स्वमतं लेखयेत्॥

यथाह नारदः। अलिपिज्ञ ऋणी यः स्यात् स्वमतन्तु स लेखयेत्। साक्षी वा साक्षिणान्येन सर्व्वसाक्षिसमीपत इति॥ ८९॥

अपिच उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततोलिखेत्॥ ९०॥

ततो लेखकोधनिकाधमर्णिकाभ्यामुभाभ्यां प्रार्थितेन मया मुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत्। साम्प्रतं स्वकृतं लेख्यमाह॥ ९१॥

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितन्तु यत्।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते॥ ९१॥

यल्लेख्यं स्वहस्तेन लिखितं अधमर्णेन तत्साक्षिभिर्विनापि प्रमाणं स्मृतं मन्वादिभिः। बलोपधिकृतादृते बलेन बलात्कारेण उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्मादिना नारदोऽप्याह॥

मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्चयत्। तदप्रमाणं लिखितं भयोपधिकृतन्तथेति।तच्चैतत्स्वहस्तकृतं परहस्तकृत ञ्च यल्लेख्यं देशाचारानुसारेण सबन्धकव्यवहारे बन्धकव्यवहारयुक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावन्न पुनः साधुशब्दैरेव प्रातिस्विकदेशभाषयाप्रिलेखनीयम्॥

यथाह नारदः। देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणं।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरमिति। विधानं विधि
राधेर्विधिराधीकरणमस्य लक्षणम्। गोप्याधिभोग्याधिकाल
कृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणं। अवि
लुप्तक्रमाक्षरम् अर्थानाक्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि
अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरम्। तदेवं
भूतं लिखितं प्रमाणम्। राजशासनवन्न साधुशब्दनियमोऽत्रे
त्यभिप्रायः। लेख्यप्रसङ्गेन लेख्यारूढमप्यृणं त्रिभिरेव देय
मित्याह ॥ ९१ ॥

ऋणं लेख्यकृतन्देयं पुरुषैस्त्रिभिरेव तु।

यथा साक्ष्यादिकृतमृणन्त्रिभिरेव देयम् तथा लेख्यकृत
मप्याहर्तृपुत्रतत्पुत्रैस्त्रिभिरेव देयम्। न चतुर्थादिभिरिति
नियम्यते। ननु पुत्रपौत्रैर्ऋणन्देयमित्यविशेषेणर्णमात्रन्त्रिभि
रेव देयमिति नियतमेव। बाढमस्त्येवोत्सर्गस्य पत्रारूढर्णविषये
स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदम्वचनमारब्धम्।
तथाहि। यत्र लक्षणमभिधाय कात्यायनेनाभिहितम्॥

एवं कालमतिक्रान्तम्पितृणान्दाप्यते ऋणमिति॥

इत्थं पत्रारूढमतिक्रान्तकालमपि पितृणां सम्बन्धिदाप्यते।

अपचितृणामिति बहुवचननिर्देशात्कालमतिक्रान्तमिति वचना च्चतुर्थादिर्दाप्यत इति प्रतीयते। तथा हारीतेनापि॥

लेख्यं यस्य भवेद्धस्ते लाभस्तस्य विनिर्दिशेदिति। अत्रापि यस्य हस्ते पत्रमस्ति तस्यर्णलाभ इति सामान्येन चतुर्थादिभ्यो ऽप्यृणलाभोऽस्तीति प्रतीयते। अतश्चैतदाशङ्कानिवृत्त्यर्थं एत द्वचनमिति युक्तं। वचनद्वयन्तु योगीश्वरवचनानुसारेण योज नीयम् अस्यापवादमाह॥०॥

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते॥९२॥

सबन्धकेऽपि पश्चाद्रूढे ऋणे त्रिभिरेव देयमिति नियमा दृणापाकरणानधिकारेणाध्याहरणेऽप्यनधिकारप्राप्ताविदमु च्यते। यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेवाधि भुज्यत इतिवदता सबन्धकर्णापाकरणे चतुर्थादेरप्यधिकारो दर्शितः नन्वेतदप्ययुक्तमेव फलभोगेन नश्यतीति सत्यम्। तद प्येतस्मिन्न सत्यपवादवचने पुरुषत्रयविषयमेव स्यादिति सर्व्व मनवद्यम्। प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति॥ ९२॥

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा। भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत्॥९३॥

व्यवहाराद्यमे पत्रे पत्रान्तरं कुर्य्यादिति विधीयते। व्यवहारक्रमलङ्घात्यन्तव्यवहितदेशान्तरस्थे पत्रे दुःस्थे दुष्टानि सन्दिह्यमानानि अवाचकानि वा लेख्यानि लिपयक्षराणि पदानि वा यस्मिंस्तद्दुर्लेख्यन्तस्मिन्दुर्लेख्ये नष्टे कालवशेन सम्मृष्टे मसीदौर्ब्बल्यादिना म्रदिते लिप्यक्षरे हृते तस्करादिभिर्भिन्ने विदलिते दग्धे अग्निना छिन्ने द्विधाभूते सति द्विर्भवति एतच्चार्थि प्रत्यर्थिनोः परस्परानुमतौ सत्यां विमत्यान्तु व्यवहाराप्राप्तौ देशान्तरस्थपत्रानयनायाध्वापेक्षया कालोदातव्यः दुर्देशाव स्थिते नष्टे वा पत्रैः साक्षिभिरेव व्यवहारनिर्णयः कार्य्यः॥

यथाह नारदः। लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते। सतस्तत्कालकरणमसतोद्रष्टदर्शनमिति॥

सतोविद्यमानपत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पत्रस्य पूर्व्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारपरिसमापनं कार्य्यम्। यदा तु साक्षिणोन सन्ति तदा दिव्येन निर्णयः कार्य्यः। अलेख्य साक्षिके दैवीं व्यवहारे विनिर्दिशेदिति स्मरणात् एतच्च जान पदं व्यवस्थापत्रं। राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति इयांस्तु विशेषः॥

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितन्तथा। राजकीयं स्मृतं लेख्यं सर्व्वेष्वर्थेषु साक्षिमदिति॥

तथान्यदपि राजकीयं जयपत्रं वृद्धवशिष्ठेनोक्तम्॥

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम्। सावधारणकञ्चैव जयपत्रकमिष्यते ॥ प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया। सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकमिति। तथा सभासदोऽपि मतं मेऽमुकपुत्रस्येति स्वहस्तं दद्युः ॥

सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः। यथालेख्यविधौ तद्वत्स्वहस्तं दद्युरेव त इति मनुस्मरणात् ॥

सभासदाञ्च परस्परानुमतिव्यतिरेकेण न व्यवहारो निष्पन्नो भवति ॥

यथाह नारदः। यत्र सभ्यो जनः सर्व्वः साध्वेतदिति मन्यते। स निष्पन्नो विवादः स्यात्सशल्यस्त्वन्यथा भवेदिति ॥ एतच्चतुःपाद्व्यवहार एव ॥

साधयेत्साध्यमर्थं यच्चतुःपादान्वितञ्च यत्। राजमुद्राङ्कितञ्चैव जयपत्रकमिष्यतइति स्मरणात् ॥

यत्र तु हीनता यथा अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतइति। तत्र न जयपत्रमस्ति अपि तु हीनपत्रमेव तच्च कालान्तरे दण्डप्राप्त्यर्थं जयपत्रन्तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः। लेख्यसन्देहे निर्णयनिमित्तान्याह ॥ ९३ ॥

सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥ ९४ ॥

शुद्धमशुद्धं चेति सन्दिग्धस्य लेख्यस्य शुद्धिः स्वहस्तलिखितादिभिः स्यात् । स्वहस्तेन लिखितं यल्लेख्यान्तरन्तेन शुद्धिः यदि सदृशान्यक्षराणि भवन्ति तदा शुद्धिः स्यादित्यर्थः । आदिशब्दात्साक्षिलेखकस्वहस्तलिखितान्तरसम्वादाच्छुद्धिरिति । युक्त्या प्राप्तिर्युक्तिप्राप्तिः । देशकालपुरुषाणान्द्रव्येण सहसम्बन्धः प्राप्तिः । अस्मिन्देशे अस्मिन्काले अस्य पुरुषस्येदन्द्रव्यङ्घटतइति युक्तिः। प्राप्तिः क्रिया तत्साक्ष्युपन्यासचिह्नमसाधारणं स्वीकारादि । सम्बन्धः अर्थिप्रत्यर्थिनोः पूर्व्वमपि परस्परविश्वासेन दानग्रहणादिसम्बन्धः। आगमोऽस्यैतावतोऽर्थस्य सम्भावितः प्राप्त्युपायः। एतएव हेतवः एभिर्हेतुभिः सन्दिग्धलेख्यशुद्धिः स्यादित्यन्वयः । यदा तु लेख्ये सन्देह निर्णयोन जायते तदा साक्षिभिर्निर्णयः कार्य्यः ॥

यथाह कात्यायनः । दूषिते पत्रके वादी तदा रूढांस्तु निर्दिशेदिति । साक्षिसम्भवविषयमिदम्वचनं । साक्ष्यसम्भवविषयन्तु हारीतवचनम् ॥

न मयैतत्कृतं पत्रं कूटमेतेन कारितं। अधरीकृत्य तत्पत्रमथ दिव्येन निर्णयइति। एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेवर्णन्दातुमसमर्थस्तदा किं कर्त्तव्यमित्यतआह ॥ ९४ ॥

लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा दत्वर्णिकोधनम्।
धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम्॥ ९५॥

यदाधमर्णिकः सकलमृणं दातुमसमर्थस्तदा प्रत्यनुसारेण दत्वा पूर्व्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेदेतावन्मया दत्तमिति। उत्तमर्णो वा उपगतं प्राप्तं धनन्तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेदेतावन्मया लब्धमिति। कथं स्वहस्तपरिचिह्नितम्। स्वहस्तलिखिताक्षरचिह्नितम्। यद्वोपगतं प्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्णायोत्तमर्णो दद्यात्। ऋणे तु कृत्स्ने दत्ते लेख्यं किंकर्त्तव्यमित्यत आह॥ ९५॥

दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्॥

क्रमेण सकृदेव वा कृत्स्नमृणन्दत्वा पूर्व्वं कृतं लेख्यम्पाटयेत्। यदा तु दुर्गदेशावस्थितं लेख्यं नष्टं वा तदा शुद्ध्यै अधमर्णत्वनिवृत्त्यर्थमन्यलेख्यं कारयेदुत्तमर्णमधमर्णः पूर्व्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रं अधमर्णाय दद्यादित्यर्थः। ससाक्षिके ऋणे कृत्स्ने दातव्ये किंकर्त्तव्यमित्यत आह॥

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकं॥ ९६॥

यत्तु समाचिकमृणन्तत्पूर्वसाचिसमचमेव दद्यात् ॥

॥ इति लेख्यप्रकरणम् ॥

लिखितसाचिभुक्तिलक्षणं त्रिविधं मानुषप्रमाणमुक्तं। अथावसरप्राप्तन्दिव्यप्रमाणमभिधास्यन् तुलाग्न्यापइत्यादिभिरारभ्य पञ्चभिः स्लोकैर्दिव्यमातृकां कथयति। तत्र तावद्दिव्यान्युपदिशति ॥ ९६ ॥

## तुलाग्न्यापोविषं कोशोदिव्यानीह विशुद्धये ॥

तुलादीनि कोशान्तानि पञ्च दिव्यानीह धर्मशास्त्रे विशुद्धये सन्दिग्धस्यार्थस्य सन्देहनिवृत्तये दातव्यानि। नन्वन्यान्यपि तण्डुलादीनि दिव्यानि सन्ति ॥

धटोग्निरुदकञ्चैव विषङ्कोशस्तथैव च। तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकइति पितामहस्मरणात्। अतः कथमेतावन्त्येवेत्यतआह ॥

## महाभियोगेष्वेतानि

एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते न पुनरिमान्येव दिव्यानीति। महत्त्वावधिञ्च वक्ष्यति। नन्वल्पाभियोगेऽपि

कोशोऽस्यैव। कोशमल्पेऽपि दापयेदिति स्मरणात्। सत्यं कोशस्य तुलादिषु पाठोनमहाभियोगेष्वेवेति नियमार्थः। किन्तु स्वल्पाभियोगेऽपि प्राप्त्यर्थः। अन्यथा महाभियोगएव स्यात्॥

अवष्टब्धाभियुक्तानामटादीनि विनिर्दिशेत्। तण्डुलास्यैव कोशस्य शङ्कास्वेव न संशयइति स्मरणात्। महाभियोगेषु शङ्कितेषु चावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह॥

## शीर्षकस्थेऽभियोक्तरि॥ ९७॥

एतानि तुलादीन्यभियोक्तरि शीर्षकस्थे अभियुक्तस्य भवन्ति। शीर्षकं शिरोव्यवहारस्य चतुर्थः पादोजयपराजयलक्षणस्तेन च दण्डोलक्ष्यते तत्र तिष्ठन्तीति शीर्षकस्थः तत्प्रयुक्तदण्डभागित्यर्थः। ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति भावप्रतिज्ञावादिनएव क्रियेति व्यवस्था दर्शिता तदपवादमाह॥ ९७॥

## रुच्या वान्यतरः कुर्य्यादितरोवर्त्तयेच्छिरः।

रुच्याभियोक्त्रभियुक्तयोः परस्परसम्प्रतिपत्त्यान्यतरोभियुक्तोभियोक्ता वा दिव्यं कुर्य्यादितरोभियुक्तोभियोक्तावा शिरः

शारीरमर्थदण्डं वा वर्त्तयेच्छ्रीकुर्य्यात्। अयमभिसन्धिः न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरम्। अपितु भावाभावविशेषेण गोचरयति। अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्यायेवार्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति स्वल्पाभियोगे महाभियोगे शङ्कावष्टम्भयोरप्यविशेषेण कोशो भवतीति युक्तं। तुलादीनि विषान्तानि तु महाभियोगेष्वेव। सावष्टम्भेष्वेवेति च नियमो दर्शितः तथावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह॥०॥

विनापि शीर्षकात्कुर्य्यात् नृपद्रोहेऽथ पातके॥९८॥

राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायाञ्च शिरःस्थायिना विनापि तुलादीनि कुर्य्यात्। महाचौर्य्याभिशङ्कायाञ्च। यथाह॥

राजभिः शङ्कितानाञ्च निर्द्दिष्टानाञ्च दस्युभिः। आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरोविनेति। तण्डुलाः पुनरल्पचौर्य्यशङ्कायामेव। चौर्य्येतु तण्डुला देया नान्यत्रेति विनिश्चय इति पितामहवचनात्। तप्तमाषस्तु महाचौर्य्याभिशङ्कायामेव। चौर्य्यशङ्काभियुक्तानान्तप्तमाषो विधीयते इतिस्मरणात्। अन्ये पुनः शपथाः अल्पार्थविषयाः॥

सत्यवाहनशस्त्राणि गोबीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च। स्पृशेच्छिरांसि पुत्राणान्दाराणां सुहृदान्तथा। अभियोगेषु सर्व्वेषु कोशपानमथापि वा। इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणइति नारदादिस्मरणात् यद्यपि मानुषप्रमाणानि निर्णयस्य निर्णायकं यत्तद्दिव्यमिति। लोकप्रसिद्ध्या शपथानामपि दिव्यत्वन्तथापि कालान्तरनिर्णय निमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदेन व्यपदेशो ब्राह्मणपरिव्राजकवत्। कोशस्य तु शपथत्वेपि धटादिषु पाठोमहाभियोगविषयत्वेनावष्टम्भाभियोगविषयत्वे मच घटादिसाम्यान्नतु समनन्तरनिर्णयनिमित्तत्वेन। तण्डुला मान्तप्तमाषकस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च धटादिवैलक्षण्यात्तेष्वपाठइतिमन्तोष्टव्यम्। एतानि च दिव्यानि शपथाश्च यथासम्भवमृणादिषु विवादेषु प्रयोक्तव्यानि। यच्च पितामहवचनं॥

स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेदिति। तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्ज्जयेदिति व्याख्येयं। ननु विवादान्तरेष्वपि प्रमाणान्तरसम्भवे दिव्यानामनवकाश एव। सत्यमृणादिविवादेषूक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते तदा दिव्यमपि भवति। साक्षिणामाशयदोषसम्भवाद्दिव्यस्य च निर्द्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य॥

यथाह नारदः। तत्र सत्ये स्थिते धर्म्मो व्यवहारस्तु साचिणि दैवसाध्ये पौरुषेयीं न लेख्यम्वा प्रयोजयेदिति। स्थावरेषु तु विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि साम न्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकर णार्थं स्थावरेषु विवादेषु इत्यादिपितामहवचनं नात्यन्तिक दिव्यनिराकरणार्थं। लिखितसामन्ताद्यभावे स्थावरविवादेष्व निर्णयप्रसङ्गात्॥ ९८॥

किञ्च। सचेलं स्नातमाहूय सूर्य्योदयउपोषितं।
कारयेत्सर्व्वदिव्यानि नृपब्राह्मणसन्निधौ॥ ९९॥

पूर्व्वेद्युरुपोषितमुदिते सूर्य्ये सचेलस्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानाञ्च ब्राह्मणानां सन्निधौ सर्व्वाणि दिव्यानि कार येत्। प्राड्विवाकः॥

त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा। नित्यं दिव्यानि देयानि शुचये चार्द्रवाससइत्युपवासविकल्पः पितामहेनोक्तो बलवदबलवन्महाकार्य्याल्पकार्य्यविषयत्वेन व्यवस्थितो द्रष्टव्यः। उपवासनियमस्च कारयितुः प्राड्विवाकस्यापि॥

दिव्येन सर्व्वकार्य्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाध्वर्य्युः सोपवासो नृपाज्ञयेति पितामहवचनात्। अत्र यद्यपि

सूर्य्योदयइत्यविशेषेणोक्तम् । तथापि शिष्टसमाचाराज्ज्ञानु षारे दिव्यानि देयानि । तथापि ॥

पूर्व्वाह्णेऽग्निपरीक्षा स्यात्पूर्व्वाह्णे च घटोभवेत् । मध्याह्ने तु जलन्देयन्धर्मतत्त्वमभीप्सता । दिवसस्य तु पूर्व्वाह्णे कोशशुद्धि र्विधीयते । रात्रौतु पश्चिमे यामे विषन्देयं सुशीतले इति पिता महोक्तोविशेषोद्रष्टव्यः । अनुक्तवेलाविशेषाणान्तण्डुलतप्तमाष प्रभृतीनां पूर्व्वाह्ण एव प्रदानम् । पूर्व्वाह्णे सर्व्वदिव्यानां प्रदानं परिकीर्त्तितमिति सामान्येन नारदस्मरणात् । अहनि त्रिधा विभक्ते प्रथमोविभागः पूर्व्वाह्णोमध्यमोमध्याह्नः उत्तरोप राह्णस्तथापरोपि कालविशेषोविधिप्रतिषेधमुखेन दर्शितः । विधिमुखस्तावत् ॥

अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्त्तिताः । शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् । चैत्रोमार्गशिराश्चैव वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः । कोशस्तु सर्व्वदा देयस्तुलास्यात्सार्व्वकालिकीति । कोशग्रहणं सर्व्वशपथा नामुपलक्षणम् । तण्डुलानां पुनर्विशेषानभिधानात्सार्व्वकालिक प्रतिषेधमुखेऽपि ॥

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात्प्रवातेन तुलान्तथा । नापराह्णेन सन्ध्यायाञ्च मध्याह्ने कदाचनेति । न शीते तोयशुद्धिः स्यादित्यत्र शीत शब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । नोष्णकाले अग्निशोधन

मित्यचोष्णकालशब्देन ग्रीष्मशरदो र्विधानस्त्रयस्यापि पुन र्निषेधश्चादरार्थः प्रयोजनन्तु वक्ष्यते। अधिकारिव्यवस्थामाह ॥ ९९ ॥

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणां। अग्नि र्ज्जलम्वा शूद्रस्य यवाः सप्त विषस्य च ॥ १०० ॥

स्त्री स्त्रीमात्रम्। जातिवयोवस्थाविशेषानादरेण। बाल आषोडशाद्वर्षाज्जातिविशेषाणादरेण। वृद्धोऽशीतिकावरः। अन्धोनेत्रविकलः। पङ्गुः पादविकलः। ब्राह्मणो जातिमात्रम्। रोगी व्याधित एतेषां शोधनार्थं तुलैवेति नियम्यते। अग्निः फालस्तप्तमाषश्च क्षत्रियस्य। जलमेव वैश्यस्य वाशब्दोऽवधारणे विषस्य यवा उक्तपरिमाणाः सप्तैव शूद्रशोधनार्थस्यवन्ति ब्राह्मणस्य तुलाविधानाच्छूद्रस्य यवा सप्त विषस्य चेति विष विधानादग्निर्ज्जलश्चेति क्षत्रियवैश्यविषयं युक्तम्। एतदेव स्पष्टीकृतं पितामहेन ॥

ब्राह्मणस्य धटोदेयः क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेदिति। यत्तु स्त्र्यादीनां दिव्याभाव स्मरणम् ॥

सव्रतानां भृशार्त्तानां व्याधितानां तपस्विनाम्। स्त्रीणाञ्च

न भवेद्दिव्यं यदि धर्म्मस्त्वपेक्षते इति। तद्दृष्ट्वा वान्यतरः कुर्य्यादिति विकल्पनिवृत्त्यर्थं एतदुक्तं भवति। अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यमेतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यं परस्पराभियोगे तु विकल्पएव। तत्रापि तुलैवेत्यनेन वचनेन नियम्यते। तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति। एतच्च वचनं सर्व्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्व्वदिव्यसमवधाने नियामकतयार्थवत् नच सर्व्वकालं स्त्रीणान्तुलैवेति॥

स्त्रीणान्तु न विषं प्रोक्तं नचापि सलिलं स्मृतम्। धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेदिति विषसलिलव्यतिरिक्तधटकोशाग्न्यादिभिः शुद्धिविधानात्। एवं बालादिष्वपि योजनीयम्। तथा ब्राह्मणादीनामपि न सार्व्वकालिकस्तुलादिनियमः॥

सर्व्वेषामेव वर्णानां कोशश्शुद्धिर्विधीयते। सर्व्वाण्येतानि सर्व्वेषां ब्राह्मणस्य विषं विनेति पितामहस्मरणात्। तस्मात्साधारणे काले वक्ष्यदिव्यसमवधाने तुलादिनियमार्थमेवेदम्वचनं। कालान्तरे तु तत्कालविहितं सर्व्वेषाम्। तथाहि॥

वर्षास्वग्निरेव सर्व्वेषां हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः। ब्राह्मणस्यतु अग्निरेव। न कदाचिद्विषं। ब्राह्मणस्य विषं विनेति प्रतिषेधात्। ग्रीष्मशरदोस्तु सलिलमेव। येषां व्याधिविशेषेणाग्न्यादिनिषेधः॥

कुष्ठिनां वर्ज्जयेदग्निं सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतान्नित्यं विषन्तु परिवर्ज्जयेदिति तेषामन्धादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति । तथा। तोयमग्निर्विषञ्चैव दातव्यं बलिनां नृणामिति वचनाद्दुर्बलानामपि सर्व्वथा विधिप्रतिषेधाद्दतुकालानतिक्रमेण जातिवयोवस्थाश्रितानि देयानि दिव्यानि। महाभियोगेष्वेतानीत्युक्तं। तच्चाभियोगस्य यदपेक्षं महत्त्वन्तदिदानीमाह ॥१००॥

नासहस्राद्धरेत् फालं न विषं न तुलान्तथा।

पणसहस्रादर्व्वाक् फालं विषन्तुलाञ्च कारयेत्। मध्यवर्त्तिजलमपि। यथोक्तम् ॥

तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेदिति। अत्र कोशस्याग्रहणम्। कोशमल्पेपि दापयेदित्यल्पाभियोगेऽपि तस्य स्मरणात्। एतानि चत्वारि दिव्यानि पणसहस्रादूर्द्धमेव भवन्ति। नार्व्वागित्यर्थः। नन्वर्व्वागप्यग्न्यादीनि पितामहेन दर्शितानि ॥

सहस्रेतु घटन्दद्यात्सहस्रार्द्धे तथायसं। अर्द्धस्यार्द्धेतु सलिलं तस्यार्द्धेतु विषं स्मृतमिति। सत्यं । तत्रेत्थं व्यवस्था। यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनमितरद्रव्यविषयं योगीश्वरवचनमिति। एतच्च वचनद्वयं स्तेयसाहसविषयम्। अपह्नवे विशेषोदर्शितः कात्यायनेन ॥

द्रव्यस्यापह्नवेऽथ च प्रमाणञ्च कल्पयेत्। तेषामाहृत्ययो दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत्॥ सर्व्वद्रव्यप्रमाणन्तु ज्ञात्वा हेम प्रकल्पयेत्। हेमप्रमाणयुक्तन्तु तदा दिव्यं प्रयोजयेत्॥ ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्। अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम्॥ षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटं। विंशद्दशविनाशे तु कोशपानं विधीयते॥ पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धस्य तण्डुलाः। ततोऽर्द्धार्द्धविनाशे तु स्पृशेत्पुत्रादिमस्तकान्॥ ततोऽर्द्धार्द्धविनाशे तु लौकिक्यस्य क्रियाः स्मृताः। एवं विचारयन् राजा धर्म्मार्थाभ्यां नहीयतइति। ज्ञात्वा संख्यां सुवर्णानामित्यत्र सुवर्णशब्दः षोडशमाषाः सुवर्णइत्युक्त परिमाणवचनः। नाशशब्दश्चापह्नववचनः। नासहस्राद्धरेत् फालमित्यत्र तु तात्त्विकपणसाहस्रिकं बोद्धव्यम्। ननु नृपद्रोहे पातके चैतानि दिव्यान्युक्तानि तत्कथं नासहस्राद्धरेत् फालं इत्यतआह॥ ०॥

नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा॥ १०१॥

नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि कुर्य्युरुपवासादिना शुचयः सन्तः तथा देशविशेषेपि नारदेनोक्तः॥

सभाराजकुलद्वारदेवायतनचत्वरे । निषेधोनिश्चलः पूज्योधूपमाल्यानुलेपनैरिति। निषेधोघटः व्यवस्था च कात्यायनेनोक्ता ॥

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत्॥ प्रातिलोम्यप्रसूतानां दिव्यं देयञ्चतुष्पथे । अतोन्येषु सभामध्ये दिव्यं देयं विदुर्बुधाः॥ अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम्। प्रातिलोम्य प्रसूतानां निश्चयोच तु राजनि। तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्द्दिशेत्॥१०१ ॥

॥ इतिदिव्यमातृका ॥

एवं सर्व्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं घटादिदिव्यानां प्रयोगमाह ॥

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः। प्रतिमानसमीभूतोरेखां कृत्वावतारितः॥ त्वं तुले सत्यधामासि पुरा देवैर्विनिर्म्मिता। तत्सत्यं वद कल्याणि संशयान्मां विमोचय॥ यद्यस्मि पापकृन्मातस्ततोमां त्वमधोनय। शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रयेत्॥ १०४ ॥

तुलाधाधारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयस्तैः प्रतिमानेन मृदादिना समीभूतः समीकृतस्तुलामाश्रितोऽधिरूढोभियुक्तोभियोक्ता वा दिव्यकारी लेखां कृत्वा येन सन्निवेशेन प्रतिमानसमीकरणदशायाम्। त्रिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेखेनाङ्कयित्वावतारितस्तुलामभिमन्त्रयेत्। प्रार्थयेदनेन मन्त्रेण। हे तुले त्वं सत्यस्य स्थानमसि पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्निर्मिता उत्पादिता तत्तस्मात्सत्यं वन्दिग्धार्थस्वरूपञ्च दर्शय कल्याणि शोभनेऽस्मात्संशयान्मां विमोचय हे मातः यद्यहं पापकृदसत्यवाद्यस्मि ततो मां त्वमधोनय। अथ शुद्धः सत्यवागस्मि ततोमामूर्द्धं गमयेति। प्राड्विवाकस्य तुलाभिमन्त्रणे मन्त्राः स्मृत्यन्तरोक्ताः। अयन्तु दिव्यकारिणः। जयपराजयलक्षणन्तु मन्त्रलिङ्गादेवावगम्यतइति न पृथगुक्तम्। धटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम्। तद्यथा॥

छित्वातु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्व्वम्। प्रणम्य लोकपालेभ्यस्तुलाकार्य्या मनीषिभिः॥ मन्त्रः॥ सौम्योवानस्पत्यच्छेदने जप्य एवच। चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च॥ कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्। चतुर्हस्ता तुला कार्य्या पादौचोपरि तत्समौ॥ अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेववा। हस्तद्वयं निधेयन्तु पादयोरुभयोरपि॥ तोरणे चैव कर्त्तव्ये पार्श्वयोरुभयोरपि। धटादुच्चतरे स्यातां नित्यन्दशभिरङ्गुलैः॥

अवलम्बौ च कर्त्तव्यौ तोरणाभ्यामधोमुखौ मृण्मयौ सूत्र
सम्बद्धौ धटमस्तकचुम्बिनौ ॥ प्राङ्मुखो निश्चलः कार्य्यः शुचौ
देशे धटस्तथा। शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ॥
प्राङ्मुखान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि । पश्चिमे तोल
येत्कर्त्तनन्यस्मिन्मृत्तिकांशुभाम् ॥ पिटकं पूरयेत्तस्मिन्निष्टका
ग्रावपांशुभिः। अत्र च मृत्तिकेष्टकाग्रावपांशूनां विकल्पः। परी
क्षका नियोक्तव्यास्तुलामानविशारदाः ॥ वणिजो हेमकाराश्च
कांस्यकारास्तथैव च। कार्य्यः परीक्षकैर्नित्यमवलम्बसमो धटः॥
उदकञ्च प्रदातव्यं धटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स
विज्ञेयः समो धटः ॥ तोलयित्वा नरं पूर्व्वं पश्चात्तमवतार्य्य तु।
धटन्तु कारयेन्नित्यं पताकाध्वजशोभितम्॥ ततस्त्वावाहयेद्देवा
न्विधिनानेन मन्त्रवित्। वादित्रतूर्य्यघोषैश्च गन्धमाल्यानु
लेपनैः॥ प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्। एह्येहि
भगवन्धर्म्म अस्मिन् दिव्ये समाविश ॥ सहितो लोकपालैश्च वस्वा
दित्यमरुद्गणैः । आवाह्य तु धटे धर्म्मं पश्चादङ्गानि विन्यसेत्॥
इन्द्रं पूर्व्वे तु विन्यस्य प्रेतेशं दक्षिणे तथा। वरुणं पश्चिमे भागे
कुवेरं चोत्तरे तथा॥ अग्न्यादिलोकपालांश्च कोणभागेषु विन्य
सेत्। इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥ कुवेरस्तु
सुवर्णाभः अग्निश्चापि सुवर्णभः। तथैव निर्ऋतिः श्यामो वायु
र्धूम्रः प्रशस्यते ॥ ईशानस्तु भवेद्रक्त एवं ध्यायेत् क्रमादिमान्।
इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः॥ धरो ध्रुवस्तथा सोम

आपश्चैवानिलोनलः। प्रत्यूषश्च प्रभातश्च वसवोष्टौ प्रकीर्त्तिताः॥ देवेशानयोर्मध्ये आदित्यानान्तथागणम्। धाताऽर्य्यमा च मित्रश्च वरुणोंशोभगस्तथा॥ इन्द्रोविवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः। ततस्त्वष्टा तथोविष्णुरजघन्योजघन्यजः॥ इत्येते द्वादशा दित्यानामभिः परिकीर्त्तिताः। अग्नेः पश्चिमभागेतु रुद्राणामयनन्विदुः॥ वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः। अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः॥ भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः। स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः॥ प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत्। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा॥ वाराहीचैव माहेन्द्री चामुण्डा गणसंयुता। निर्ऋते रुत्तरे भागे गणेशायतनन्विदुः॥ वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते। गगनस्पर्शनोवायु रनिलोमारुतस्तथा॥ प्राणःप्राणेशजीवौ च मरुतोष्टौ प्रकीर्त्तिताः। धटस्योत्तरभागे तु दुर्गामावर्त्तयेद्बुधः॥ एतासान्देवतानान्तु स्वनाम्ना पूजनं विदुः। भूषावसानं धर्म्माय दत्वार्घ्यादिकंक्रमात्॥ अर्घ्यादिपश्चादङ्गानां भूषान्तमुपकल्पयेत्॥ गन्धादिकां नैवेद्यान्ताम्परिचर्य्यां प्रकल्पयेदिति॥ अत्र च तुलाम्पताकाध्वजालङ्कृतां विधाय तस्यामेवेशानीति मन्त्रेण धर्म्ममावाह्य धर्म्मायार्घ्यं प्रकल्पयामि नमइत्यादिप्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयकटकमुकुटादिभूषान्तन्दत्वा इन्द्रादीनां दुर्गान्तानामप्यर्घाद्यैः

खङ्गनामभिश्च चतुर्थ्यन्तैर्नमोन्तैरर्घ्यादिभूषणान्तमुपचारार्थानुपम येन दत्वा धर्म्माय गन्धपुष्पधूपदीपनैवेद्यानि दत्वेन्द्रादीनां कुम्भादीनि पूर्व्ववद्दद्यात् । गन्धपुष्पाणि च घटपूजायां रक्तानि कार्य्याणि ॥

यथाह नारदः। रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः। अर्चयेत्तु घटम्पूर्व्वन्ततः शिष्टांस्तु पूजयेदिति। इन्द्रादीनान्तु विशेषानभिधानात्। यथालाभं रक्तैरन्यैर्व्वा पूजनमिति पूजा क्रमः। एतच्च सर्व्वं प्राड्विवाकः कुर्य्यात्। यथोक्तम् ॥

प्राड्विवाकस्ततोविप्रोवेदवेदाङ्गपारगः। श्रुतव्रतोपसम्पन्नः शान्तचित्तोविमत्सरः ॥ सत्यसन्धः शुचिर्द्दक्षः सर्व्वप्राणिहिते रतः। उपोषितः शुद्धवासाः कृतदन्तानुधावनः ॥ सर्व्वासां देवतानाञ्च पूजां कुर्य्याद्यथा विधि। तथा। बलिभिश्चतुर्भि स्ततस्तु दिक्षु लौकिकेऽग्नौ होमः कार्य्यः। यथाह ॥

चतुर्दिक्षु तथा होमः कर्त्तव्योवेदपारगैः। आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥ सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् । प्रणवादिकाङ्गायत्रीमुच्चार्य्य पुनः स्वाहाकारान्त प्रणवमुच्चार्य्य समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं जुहुया दित्यर्थः। एवं हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थ वक्ष्यमाणमन्त्रसहितम्पत्रे लिखित्वा तत्पत्रं शोध्यशिरोगतं कुर्य्यात् ॥

यथाह । यस्यार्थमभियुक्तस्य लिखितां तत्तु पत्रके । मन्त्रेणानेन सहितं तत्कार्य्यन्तु शिरोगतम् ॥ मन्त्रश्च ॥

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्त मिति । एतच्च धर्म्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठान काण्डं सर्व्वदिव्यसाधारणम् । यथोक्तम् ॥

इमं मन्त्रविधिं कृत्स्नं सर्व्वदिव्येषु योजयेत् । आवाहनञ्च देवानान्तथैव परिकल्पयेदिति । अनन्तरमाड्विवाको धटमा मन्त्रयेत् । धटमामन्त्रयेच्चैव विधिनानेन मन्त्रविदिति स्मर णात् । मन्त्राश्च दर्शिताः ॥

त्वन्धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । धकारा द्धर्म्ममूर्त्तिस्त्वं टकारात्कुटिलं नरं ॥ धृतो भावयसे यस्माद्धट स्तेनाभिधीयसे । त्वं वेत्सि सर्व्वभूतानाम्पापानि सुकृतानि च ॥ त्वमेव सर्व्वं जानीषे न विदुर्य्यानि मानवाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥ तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्ह सीति । शोध्यस्त्वन्तुलेत्यादि पूर्व्वोक्तेन मन्त्रेण तुलामामन्त्र येत् । अनन्तरमाड्विवाकः शिरोगतपत्रकं शोध्यम् । यथास्थानं यथासन्निवेशञ्च धटमारोपयति । पुनरारोपयेत्तस्मिन् शिरो वस्थितपत्रकमिति स्मरणात् । आरोपितञ्च विनाडीपञ्चकं यावत्तथैवावस्थापयेत् तत्कालपरीक्षाञ्च ज्योतिःशास्त्रविदः कुर्य्यात् ॥

ज्योतिर्व्विद्ब्राह्मणः श्रेष्ठः कुर्य्यात्कालपरीक्षणम्। विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैरिति स्मरणात्। दशगुर्व्वक्षरोच्चारणकालः प्राणः षट्प्राणा विनाडी। उक्तञ्च। दश गुर्व्वर्णः प्राणः षट्प्राणास्स्यात् विनाडिका तासां षष्ट्या घटी घटीनां षष्ट्याहोरात्रः। त्रिंशद्भिर्द्दिवसैर्मासइति। तस्मिंस्तु काले शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषाश्च नियोक्तव्याः। ते च शुद्ध्यशुद्धी कथयन्ति। यथोक्तम्॥

पितामहेन। साक्षिणां ब्राह्मणाः श्रेष्ठा यथा दृष्टार्थवादिनः। ज्ञानिनः शुचयोऽलुब्धानियोक्तव्या नृपेण तु॥ शंसयन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदेति। शुद्ध्यशुद्धि निर्णयकारणञ्चोक्तम्॥

तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः। समोवा हीयमानोवा न विशुद्धोभवेन्नर इति। यत्तु पितामहवचनम्। अल्पदोषः समोज्ञेयोवहुदोषस्तु हीयतइति। तत्र यद्यप्यभियुक्तस्यार्थस्याल्पत्वं बहुत्वञ्च न दिव्येनावधारयितुं शक्यते। तथापि सहृदमतिपूर्व्वत्वेनाल्पत्वमसकृत्मतिपूर्व्वत्वेन च महत्त्वमिति। दण्डप्रायश्चित्ताल्पत्वमहत्त्वमवधार्य्यते। यदा चानुपलभ्यमाणदृष्टकारणएव कक्षादीनाञ्छेदोभङ्गोवा भवति तदाप्यशुद्धिरेव। कक्षाछेदे तुलाभङ्गे धटकर्कटयोस्तथा रज्जुच्छेदे च भङ्गे च तथैवाशुद्धिमादिशेदिति स्मरणात्। कक्ष्यं शिक्यतलङ्कर्कटौ तुलान्तयोः। शिक्याधाराकियदन्नावायसकीलकौ

कर्कटसदृशयष्टिभौ। अधः पादस्तम्भयोरुपरि निविष्ट तुला आरोपयेः। यदा तु दह्यमानकारणकरणाभग्नस्तदा पुनरारोपयेत्। शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरमिति स्मरणात्। मतञ्च॥

ऋत्विक्पुरोहिताचार्य्यान् दक्षिणाभिश्च तोषयेत्। एवं कारयिता राजा भुक्त्वाभोगान्मनोरमान्। महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते॥ यदा तू कनकधन्वटन्तथैव स्थापयितुमिच्छति। तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्य्यात्॥

विशालामुच्छ्रितां शुभ्रां धटशालान्तु कारयेत्। यत्र स्थानापयन्येत अभिसाक्षाद्यवायसैः॥ तत्रैव लोकपालादीन् सर्व्वान्दिक्षु निवेशयेत्। त्रिसन्ध्यम्पूजयेच्चैतान् गन्धमाल्यानुलेपनैः॥ कपाटवीजसंयुक्तां परिचारकरक्षिताम्। मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपरति स्मरणात्। वीजानि यवव्रीह्यादीनाम्॥ इति धटविधिः॥ इदानीं क्रमप्राप्तमग्निमाह ॥१०४॥

करौ विमृदितव्रीहेर्लक्षयित्वा ततोन्यसेत्। सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत्॥१०५॥

दिव्यमात्रिकोक्तसाधारणधर्म्मेषु सत्सु तुलाविधानोक्तधर्म्म

ब्राह्मणादिभिरुपचारोपचारान्ते च विश्वस्तो सत्यवचनाग्निविधौ विशेषः। विमर्दितव्रीहेः विमर्दिताविचर्षिताः व्रीहयः कराभ्यां येनासौ विमर्दितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रण किणादिस्थानेष्वलक्तकरसादिनाङ्कयित्वा ॥

यथाह नारदः। हस्तक्षतेषु सर्व्वेषु कुर्य्यादङ्कं सपदानि लिति अनन्तरं सप्ताश्वत्थपत्राणि हस्तयोरञ्जलीकृतयोर्न्यसेत् ॥

पत्रैरञ्जलिमापूर्य्य आश्वत्थैः सप्तभिः समैरिति स्मरणात्। तानि च हस्तसहितानि तावत्सूत्रेण वेष्टयेत्। यावच्चाश्वत्थ पत्राणि सप्तकृत्वो वेष्टयेदित्यर्थः। सूत्राणि च सप्त गुणानि भवन्ति। वेष्टयेत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिरिति नारद वचनात्। तथा सप्त शमीपत्राणि सप्तैव दूर्व्वापत्राणि चाक्षता द दध्यक्तानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत् ॥

सप्तपिप्पलपत्राणि शमीपत्राण्यथाक्षतम्। दूर्व्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेदिति स्मरणात्। तथा कुसुमानि च विन्यसेत्। सप्तपिप्पलपत्राणि अक्षतान् सुमनोदधि। हस्तयो र्विक्षिपेत्तच्च सूत्रेण वेष्टयेत्तथेति पितामहवचनात्। सुमनसः पुष्पाणि यदपि स्मरणम् ॥

अथ तस्मिन्नु पाणिभ्यामर्कपर्णैस्तु सप्तभिः। अन्तर्हितं हरन् गच्छन्नदग्धः सप्तमे पदे इति। तदश्वत्थपत्राभावे अर्कपत्र विषयं वेदितव्यम्। अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात् ॥

पिप्पलाज्जायते वह्निः पिप्पलोदुम्बराद्भृतः । अतस्तस्य तु पर्णानि हस्तयोर्निक्षिपेद्बुध इति । कर्त्तुरग्न्यभिमन्त्रणमाह ॥ १०५ ॥

त्वमग्ने सर्व्वभूतानामन्तश्चरसि पावक । साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यङ्कवे मम ॥ १०६ ॥

हे अग्ने त्वं सर्व्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जानामन्तःशरीराभ्यन्तरे चरसि उपयुक्तान्नपानादीनां पाचकत्वेन वर्त्तसे । पावक शुद्धिहेतो करेञ्जान्तशुद्धिदर्शिन् साक्षिवत्पुण्यपापेभ्यः सत्यं ब्रूहि । पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी पुण्यपापे अवेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः । अयःपिण्डे त्रिभिस्तापैस्तप्ते सन्दंशेन पुरत आनीते कर्त्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन्ननेन मन्त्रेणाग्निमभिमन्त्रयेत् ॥

यथाह नारदः । अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम् । तापे तृतीये सन्ताप्य ब्रूयात्सत्यपुरस्कृतमिति । अस्यार्थः । लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः सन्ताप्योदके निक्षिप्य तृतीयतापे सन्ताप्य सन्दंशेन गृहीत्वा पुरतः आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं त्वमग्ने सर्व्वभूतानामित्यादि मन्त्रं कर्त्ता ब्रूयात् । प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे

लौकिकमग्निमुपसमाधाय अग्नये पावकाय स्वाहेत्यनेनाष्टोत्तरशतवारं जुहुयात्। शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतमिति वचनात्। हुत्वा च तस्मिन्नग्नावय:पिण्डं प्रक्षिप्य तस्मिन्ताप्यमाने धर्मावाहनादिहवनान्तं पूर्व्वोक्तं विधिमभिधाय तृतीये तापे वर्त्तमाने ऽय:पिण्डस्थमग्निमेभिर्मन्त्रैरभिमन्त्रयेत्॥

त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्व्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥ जठरस्थोऽसि भूतानां ततोवेत्सि शुभाशुभम्। पापम्पुनासि वै यस्मात्तस्मात्पावक उच्यते॥ पापेषु दर्शयात्मानमर्च्चिष्मान् भव पावक। अथवा शुद्धभावेषु शीतो भव हुताशन॥ त्वमग्ने सर्व्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्य्यानि मानुषा:॥ व्यवहाराभिशस्तोयं मानुष: शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि॥१०६॥

अपिच। तस्येत्युक्तवतो लौहम्पञ्चाशत्पलिकं समम्। अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥१०७॥

तर्त्तुस्य करित्युक्तवतस्त्वमग्ने सर्व्वभूतानामित्याद्यभिमन्त्रणं कृतवत:। लौहं लोहविकारम्पिण्डं पञ्चाशत्पलिकं पञ्चाशत्पल,

संमितं सममग्रसरहितम्। सर्वतश्च समं वृत्तं वर्तुलमित्यर्थः। तथा ष्टाङ्गुलायोमयम्॥

अग्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्। पिण्डन्तु तापयेदग्नौ पञ्चाशत्पलिकं सममिति पितामहस्मरणात्। अग्निवर्णमग्निसदृशं उभयोर्हस्तयोरश्वत्थपत्रव्यवहितयोर्न्यसेत् क्षिपेत्। प्राड्विवाकः। ततः किं कुर्य्यादित्यत आह॥ १०७॥

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।

स पुरुषस्तं लोहपिण्डमञ्जलिना गृहीत्वा सप्तमण्डलानि शनैर्व्रजेत्। एव कारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणञ्च दर्शयति। यथाह पितामहः॥

न मण्डलमतिक्रामेन्नाप्यर्व्वाक् स्थापयेत्पदमिति। सप्तैव मण्डलानि शनैर्व्रजेदित्युक्तम्। तत्रैकं मण्डलं किं प्रमाणं मण्डलयोरन्तरञ्च कियत्प्रमाणमित्यत आह॥

षोडशाङ्गुलकं ज्ञेयं मण्डलन्तावदन्तरं॥ १०८॥

षोडशाङ्गुलानि यस्य तत् षोडशाङ्गुलकम्। षोडशाङ्गुलप्रमाणं मण्डलं बोद्धव्यम्। मण्डलयोरन्तरं मध्यञ्च तावदेव।

षोडशाङ्गुलकमेव। सप्तमण्डलानि व्रजेदिति वदता प्रथम
मवस्थानमण्डलमेकमुक्तमतश्चाष्टमण्डलानि षोडशाङ्गुल
कानि मण्डलान्तराणि तु सप्त तावत्प्रमाणानि। एतदेव नार
देन परिसङ्ख्यायोक्तम्॥

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम्। अष्टाभि
र्मण्डलैरेवमङ्गुलानां शतद्वयम्॥ चत्वारिंशत्समधिकं भूमे
रङ्गुलमानत इति। अयमर्थः। अवस्थानमण्डलात् षोडशा
ङ्गुलान्मण्डलान्तरमन्यत् मण्डलम्। द्वितीयादेकमेकं द्वात्रिं
शदङ्गुलं सान्तरालम्। तदेवमवस्थानमण्डलं षोडशाङ्गुलं।
गन्तव्यानि च सप्तमण्डलानि सान्तरालानि द्वात्रिंशदङ्गुला
न्येवमष्टाभिर्मण्डलैश्चत्वारिंशदधिकं शतद्वयं भूमेरङ्गुलमान
तोऽङ्गुलमानमिति। सार्व्वविभक्तिकस्तसिः। अस्मिंस्तु पक्षे अव
स्थानमण्डलं षोडशाङ्गुलं विधाय द्वात्रिंशदङ्गुलप्रमाणानां
सप्तानां सान्तरालमण्डलभूतानां भूभागानामेकमेकं भूभागं
द्विधाविभज्यान्तरालभूभागान् षोडशाङ्गुलप्रमाणमण्डला
न्विरच्य मण्डलभूभागेषु षोडशाङ्गुलप्रमाणेषु गन्तृपद
प्रमाणानि सप्तमण्डलानि कार्य्याणि। यथा तेनैवोक्तम्॥

मण्डलस्य प्रमाणन्तु कुर्य्याद्गन्तृपदसम्मितमिति। यत्तु पिता
महेनोक्तम् कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमस्तथा। आग्नेयं
मण्डलञ्चाद्यं द्वितीयं वारुणं स्मृतम्। तृतीयं वायुदैवत्यं
चतुर्थं यमदैवतं। पञ्चममिन्द्रदैवत्यं षष्ठं कौवेरमुच्यते। सप्तमं

सोमदैवत्यं सावित्रं त्वष्टमं स्मृतम्। नवमं सर्व्वदैवत्यमिति वेद विदोविदुः। द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम्। अष्टाभिर्मण्डलैरेवमङ्गुलीनां शतदयम्। षट्पञ्चाशत्तम धिकं भूमेस्तु परिकल्पना॥ कर्त्तुः पदसमं कार्य्यं मण्डलन्तु प्रमाणतः। मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदितादृति। तत्र नवमं सर्व्वदैवत्यमपरिमिताङ्गुलप्रमाणं मण्डलं विहाया ष्टभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणै रङ्गुलानां षट्पञ्चाशदधिकं शतदयं सम्पद्यते। तत्रापि गन्त व्यानि सप्तैव मण्डलानि यतः प्रथमे तिष्ठति नवमे चिपतीति न विरुध्यते। अङ्गुलप्रमाणञ्च॥

तिर्य्यग्यवोदराण्यष्टावूर्द्धावा त्रीहयस्त्रयः। प्रमाणमङ्गुल स्योक्तं वितस्तिर्द्वादशाङ्गुलाः॥ हस्तोवितस्तिद्वितयं दण्डोहस्त चतुष्टयम्।तत्सहस्रदयं क्रोशोयोजनन्तचतुष्टयमिति बोध्यव्यं। सप्तमण्डलानि गत्वा किं कर्त्तव्यमित्यतआह॥१०८॥

मुक्ताग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्।

अष्टमे मण्डले स्थित्वा नवमे मण्डलेग्नितप्तमयःपिण्ड म्यक्त्वा व्रीहिन् कराभ्यां मर्द्दयित्वा अदग्धहस्तश्चेत् शुद्धिमा प्नुयात्। दग्धहस्तश्चेदशुद्ध इत्यर्थसिद्धम्। यस्तु सन्त्रासात्प्रस्ख लन् हस्ताभ्यामन्यत्र दह्यते तथाप्यशुद्धोन भवति॥

यथाह कात्यायनः। प्रस्खलन्नभिशस्तः स्यात् स्थानादन्यच दह्यते। अदग्धमपि तं विद्युर्ह्यवा तस्य भूयोपि दापयेदिति॥

अन्तरा पतिते पिण्डे सन्देहेवा पुनर्हरेत्॥१०९॥

यदा गच्छतोऽन्तरा अष्टममण्डलादर्व्वागेव पिण्डः पतति। दग्धादग्धत्वे वा संशयस्तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम्। अत्र चायमनुष्ठानक्रमः। पूर्व्वेद्युर्भूतशुद्धिं विधायापरेद्युर्मण्डलानि यथाशास्त्रं निर्म्माय मण्डलाधिदेवतास्व मन्त्रैस्तच तत्र सम्पूज्याग्निमुपसमाधाय शान्तिहोमन्निवर्त्याशावयःपिण्डं निधाय धर्म्मावाहनादि सर्व्वदेवतापूजां हवनान्तां निर्व्वर्त्योपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे मण्डले तिष्ठतोऽग्नेरिमहनादिकर संस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्त्तुः शिरसि बध्वा प्राड्विवाकस्तृतीये तापे अग्निमभिमन्त्र्य तप्तमयःपिण्डं सन्दंशेन गृहीत्वा कर्त्तभिमन्त्रितन्तस्याञ्जलौ निदध्यात्। सोपि मण्डलानि सप्त गत्वा नवमे मण्डले निक्षिप्यादग्धः शुद्धो भवति॥ इत्यग्निविधिः॥ सम्प्रत्युदकविधिमाह॥१०९॥

सत्येन माभिरक्षत्वं वरुणेत्यभिशाप्य कं। नाभिदघ्नोदकस्थस्य गृहीत्वोरुजलं विशेत्॥११०॥

हे वरुण सत्येन मां अभिरक्ष त्वं इत्यनेन मन्त्रेण वं उदकमभिप्राप्य अभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा शोध्योजलमविशेत् जले निमज्जेत्। एतच्च वरुणपूजायां सत्यां॥

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः। वरुणाय प्रकुर्वीत पूजामादौ समाहितइतिस्मरणात्। तथा साधारणधर्म्मेषु धर्म्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च। तथा तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्म्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा॥ अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणइति। प्राड्विवाकेनोदकाभिमन्त्रणे कृते शोध्यः सत्येन माभिरक्षत्वं वरुणेत्युदकं प्रार्थयते। उदकस्थानानि च नारदेनोक्तानि॥

नदीषु तु न वेगासु सागरेषु वहेषु च। ह्रदेषु देवखातेषु तडागेषु सरःसु चेति। तथापितामहेनापि। स्थिरे तोये निमज्जेत न ग्राहिणि नचाल्पके। तृणशैवालरहिते जलौकामत्स्यवर्जिते॥ देवखातेषु यत्तोयं तस्मिन् कुर्य्यात् विशोधनम्। आहार्य्यं वर्ज्जयेन्नित्यं शीघ्रगासु नदीषु च। आविशेत्सलिले नित्यमूर्म्मिपङ्कविवर्ज्जितइति। आहार्य्यन्तडागादिभ्य आहृतं ताम्रकटाहादिक्षिप्तं जलम्। नाभिप्रमाणोदकस्थस्य यज्ञियवृक्षोद्भवान्धर्म्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्। उदके प्राङ्मुख

स्तिष्ठेत् यावत्स्वरूपमप्युदक पीति शरपातात्। ततः किं कर्त्तव्य मित्यतआह ॥ ११० ॥

समकालमिषुं मुक्तमानीयान्योजवी नरः। गते तस्मिन्निमग्नांगं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १११ ॥

निमज्जनसमकालन्तस्मिन् जविन्येकस्मिन् पुरुषेऽन्योजवी शरपातस्थानस्थितः। पूर्व्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति तदा स शुद्धोभवति। एतदुक्तम्भवति। त्रिषु शरेषु मुक्तेषु एकोवेगवान् मध्यशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठत्यन्यस्तु पुरुषोवेगवान् शरमोचस्थाने तोरणमूले तिष्ठति। एवं स्थितयोस्तृतीयस्यां करतलतालिकायां शोध्योनिमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यशरपात स्थानं गच्छति। शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा ऽशुद्धोभवतीति। एत देव स्पष्टीकृतं पितामहेन ॥

गन्तुश्चापि च कर्त्तुश्च समङ्गमननमज्जनं। गच्छेत्तोरण मूलात्तु लच्यस्थानं यवी नरः॥ तस्मिन् गते द्वितीयोपि वेगादा दायमायकं। गच्छेत्तोरणमूलन्तु यतः स पुरुषोगतः॥ आग तस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक्

तदा शुद्धं विनिर्द्दिशेत् । जविनोश्च पुरुषयोर्निर्द्धारणं कृतन्नारदेन ॥

पञ्चाशतोधावकानां यौ स्यातामधिकौ जवे । तौ च तत्र नियोक्तव्यौ शरानयनकारणादिति । तोरणञ्च निमज्जनसमीपस्थाने समे शोध्य कर्णप्रमाणोच्छ्रितं कार्य्यं । गत्वा तु तज्जलस्थानन्तटे तोरणमुच्छ्रितम् । कुर्व्वीत कर्णमात्रन्तु भूमिभागे समे शुचाविति नारदस्मरणात् । शरत्रयं वैणवञ्च धनुर्मङ्गलद्रव्यैः श्वेतपुष्पादिभिः प्रथमं पूजयेत् ॥

शरान्सम्पूजयेत्पूर्व्वं वैणवञ्च धनुस्तथा । मङ्गलैर्धूपपुष्पैश्च ततः कर्म्म समाचरेदिति पितामहवचनात् । धनुषः प्रमाणं लक्ष्यस्थानञ्च नारदेनोक्तम् ॥

क्रूरन्धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् । मन्दम्पञ्चशतं ज्ञेयमेष ज्ञेयोधनुर्व्विधिः ॥ मध्यमे नतु चापेन प्रक्षिपेच्च शरत्रयं । हस्तानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः । न्यूनाधिके तु दोषःस्यात् क्षिपतः सायकांस्तथेति । अङ्गुलानां सप्ताधिकं शतं क्रूरंधनुः । एवं षट्शतं पञ्चशतञ्च । एवञ्चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य धनुषः प्रमाणम् । मध्यमस्य दशाङ्गुलाधिकम् । मन्दस्य नवाङ्गुलाधिकमित्युक्तम्भवति । शराश्चानायसाग्रावैणवाः कार्य्याः शरांश्चानायसाग्रांस्तुप्रकुर्व्वीत विशुद्धये । वेणुकाण्डमयांश्चैव क्षेप्तातु सुदृढं क्षिपेत् क्षेप्ता क्षत्रियस्तद्वृत्तिर्ब्राह्मणोवा सोपवासोनियोक्तव्यः । यथाह ॥

क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा। अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेदिति। त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः तेषाञ्च प्रेषितानाञ्च शराणां शास्त्रचोदनात्। मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसेति वचनात्। तचापि पतनस्थानादाने तव्येन सर्पणस्थानात्। शरस्य पतनं ग्राह्यं सर्पणन्तु विवर्जयेत्। सर्पन्सर्पन् शरोयायाद्दूराद्दूरतरं यतइति वचनात्। वाते च प्रवाति विषमादिदेशे च शरमोक्षोन कर्त्तव्यः। इषुञ्च प्रक्षिपेद्विद्वान् मारुते चातिवायति। विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले। तृणगुल्मलतावल्लिपङ्कपाषाणसंयुतइति पितामहवचनात् निमग्नायप्समक्षेषेच्छुद्धिमाप्नुयादिति वदता उक्मक्षिताङ्गस्याशुद्धिर्दर्शिता स्थानान्तरगमने चाशुद्धिः पितामहेनोक्ता॥

अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात्। स्थानादान्यत्र गमनाद्यस्मिन्पूर्वं निवेशितइति। एकाङ्गस्यापि दर्शनादिति कर्णाद्यभिप्रायेण शिरोमात्रन्तु दृश्येत न कर्णौनापि नासिका। अप्सु प्रवेशने यस्य शुद्धमपि निर्दिशेत् इति विशेषाभिधानात्। अयमत्र प्रयोगक्रमः। उक्तलक्षणजलाशयं निधाउक्तलक्षणन्तोरणं विधायोक्तप्रमाणदेशे लक्ष्यं निधाय तोरणसन्निधौ सशरत्धनुः सम्पूज्य जलाशये वरुणमावाह्य पूजयित्वा ततोधर्मादींश्च देवान् हवनान्तमिष्ट्वाशोध्य शिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाकोजलमभिमन्त्रयते। तोयत्वम्प्रा

त्विमावाप इत्यादिमन्त्रेण । अथ शोध्यः सत्येनेत्यादिमन्त्रेण जलमभिमंत्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बली यसः पुरुषस्य समीपमुपसर्पन्ति । मध्य शरेषु त्रिषु मुक्तेषु मध्य शरपातस्थाने मध्यमं शरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते मध्यस्थितंच तीरस्थमूलस्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद् मज्जनं अथ शरानयनमिति ॥ इत्युदकविधिः ॥ इदानीं विषविधानमाह ॥ १११ ॥

त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ ११२ ॥
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् । यस्य वेगै र्विना जीर्य्येच्छुद्धिं तस्य विनिर्दिशेत् ॥ ११३ ॥

त्वं विषेत्यादिमन्त्रेण विषमभिमंत्र्य कर्त्ता विषं हिमशैलजं शृङ्गप्रभवं भक्षयेत् । तच्च भक्षितं यस्य विषं वेगैर्विना जीर्य्यति स शुद्धो भवति । विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः । धातो र्धात्वन्तरप्राप्तिर्विषवेग इति स्मृत इति वचनात् । धातवश्च त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणीति सप्त एवं च सप्तैव विष वेगा भवन्ति । तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि ॥
वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्यो र्द्ध्वं तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमो

यौ वसति शिवसंज्ञां कण्ठभूषश्च शिवां षष्ठानिमायकोऽसौ वितरति चमृतिं सत्यमभयवचसेति। अत्र च महादेवस्य पूजा कर्त्तव्या ॥

अत्राह नारदः। इत्यादिमं शोधकायोऽदेवब्राह्मणसन्निधौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्। प्राड्विवाकः कृतोप वासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादि पूजां हवनाद्यां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते ॥

त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनां। पापानां दर्शया त्मानं शुद्धानाममृतं भव॥ मृत्युमूर्त्ते विष त्वं हि ब्रह्मणा परि निर्म्मितः। त्रायस्वैनं नरं पापात् सत्येनास्यामृतं भवेति॥ एवमभि मन्त्र्य दक्षिणाभिमुखाय स्थिताय दद्यात्। नारदवचनात्॥ द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते। उदङ्मुखः प्राङ्मु खो वा विषन्दद्यात्समाहित इति। विषञ्च वत्सनाभादियाह्यम्। शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य चेति पितामहवचनात्। वर्ज्यानि चतेनैवोक्तानि॥

चारितानि च जीर्णानि कृत्रिमाणि तथैव च। भूमिजानि च सर्व्वाणि विषाणि परिवर्जयेदिति। तथा च नारदेनापि। भृष्टञ्च चारितञ्चैव धूपितं मिश्रितं तथा। कालकूटमलावुञ्च विषं यत्नेन वर्जयेदिति। कालश्च नारदेनोक्तः। तोलयित्वे

स्थितच्छाये देयं तद्धि हिमागमे । नापराह्णे न सन्ध्यायाञ्च
मध्याह्ने च धर्म्मविदिति। कालान्तरे तूक्तप्रमाणादल्पं देयम्॥

वर्षे चतुर्य्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता। हेमन्ते तु सप्त
यवाः शरद्यल्पाततोपिहीति स्मरणात्। अल्पेतिषड्यवेत्यर्थः।
हेमन्तग्रहणेन शिशिरस्यापिग्रहणम्। हेमन्तशिशिरयोः
समासेनेतिश्रुतेः वसन्तस्य च सर्व्वदिव्यसाधारणत्वात्। तत्रापि
सप्तयवाविषस्य घृतप्लुतन्देयन्नारदवचनात्। विषस्य पलषड्भा
गाद्भागोविंशतितमस्तु यः। तमष्टभागहीनन्तु शोध्ये दद्याद्घृत
प्लुतमिति। पलञ्चात्र चतुःसुवर्णिकं। तस्य षष्ठोभागोदश
दशयवाश्च भवन्ति। त्रियवस्त्वेककृष्णलं। पञ्चकृष्णलकोमाषः
माषादृत्येकोमाषः पञ्चदशयवाभवन्ति। पञ्चदशानां माषानां
यवाः सार्द्धशतम्भवन्ति। पूर्व्वे च दशयवाइति। षष्ठ्यधिकं शतं
यवाः पलस्य षष्ठोभागस्तस्माद्विंशतितमोभागोष्टयवास्तस्या
ष्टमभागहीनएकयवहीनस्तं विंशतितमम्भागं सप्तयवं घृतप्लुत
न्दद्यात्। घृतञ्च विषात्त्रिंशद्गुणं ग्राह्यं। पूर्व्वाह्णे शीतले देशे विष-
न्देयन्तु देहिनाम्। घृतेन योजितं श्लक्ष्णं पिष्टन्त्रिंशद्गुणान्वित
मिति कात्यायनवचनात्। त्रिंशद्गुणेन घृतेनान्वितं विषम्।
शोध्यश्च कुहकादिभ्योरक्षणीयः त्रिरात्रमष्टरात्रं वा पुरुषैः
स्वैरधिष्ठितम्। कुहकादिभयाद्राजा रक्षयेद्दिव्यकारिणम्।
औषधिं मन्त्रयोगांश्च मणीनथ विषापहान्। कर्त्तुः शरीर
संस्थांस्तु गूढोत्पन्नान् परीक्षयेदिति पितामहवचनात् तथाच

विषमपि रक्षणीयम्। शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितं। अकृत्रिममसंमूढममन्त्रोपहतन्तुयदिति नारदस्मरणात्। तथा विषे पीते यावत्करतालिकाशतपञ्चकन्तावत्प्रतीक्षणीयो ऽनन्तरञ्चिकित्सनीयः॥

यथाह नारदः। पञ्चतालशतं कालं निर्व्विकारोयदा भवेत्। तदा भवति संशुद्धस्ततः कुर्य्याच्चिकित्सितमिति। पितामहेन तु दिनान्तोवधिरुक्तोस्यमात्राविषयः। भक्षिते तु यदा स्वस्थोमूर्च्छाछर्द्दिविवर्जितः निर्व्विकारोदिनस्यान्ते शुद्धन्तमपि निर्द्दिशेदिति अत्र च प्राड्विवाकः सोपवासोमहादेवं सम्पूज्य तत्पुरतोविषं स्थापयित्वा धर्म्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखाय स्थिताय विषम्प्रयच्छति। सच शोध्योविषमभिमन्त्र्य भक्षयतीति क्रमः। इति विषविधानम्। कोशविधिमाह॥ ११३॥

देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत्।
संश्राव्य पाययेत्तस्माज्जलन्तु प्रसृतित्रयम्॥ ११४॥

उग्रान्देवान्दुर्गादित्यादीन् समभ्यर्च्य गन्धपुष्पादिभिः पूजयित्वा मंस्नाप्य तत्स्नानोदकमाहरेत्। आहृत्य च। तोयत्वं प्राणिनां प्राणइत्यादिना तत्तोयं प्राड्विवाकः संश्राव्य

शोध्येन च तत्तोयं पात्रान्तरे कृत्वा सत्येन माभिरक्षत्वं वरुणे त्यनेनाभिमन्त्रितं पाययेत्प्रकृतिनियम्। एतच्च साधारण धर्मेषु धर्मावाहनादिषकदेवतापूजाहोमसमन्त्रकप्रतिज्ञा पत्रशिरोनिवेशनान्तेषु सत्सु। अत्र च साध्यदेवतापूजानियमः कार्य्यनियमोधिकारिनियमश्च पितामहादिभिरुक्तः। भक्तो योयस्य देवस्य पाययेत्तस्य तज्जलम्। समभावे तु देवानामा दित्यस्य तु पाययेत्॥ दुर्गायाः पाययेच्चोरान् येच शस्त्रोप जीविनः। भास्करस्य तु यत्तोयं ब्राह्मणंतन्न पाययेत्॥ दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानिलिति॥ देवतानियमः। विश्रम्भे सर्व्वशङ्कासु सन्धिकार्य्ये तथैव च। एषु कोशः प्रदातव्योनित्यं चित्तविशु द्धयइति कार्य्यनियमः। पूर्व्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याव्यसनिनः कोशपानं विधीयते। सशूकस्यास्ति कस्य॥

मद्यपस्त्रीव्यसनिनां कितवानान्तथैवच। कोशप्राज्ञैर्न दातव्योयेच नास्तिकवृत्तयः। महापराधे निर्धर्म्मे कृतघ्ने क्लीव कुत्सिते। नास्तिकव्रात्यदासेषु कोशपानं विवर्ज्जयेदिति। महा पराधोमहापातकोनिर्धर्म्मोवर्णाश्रमधर्म्मरहितः पाषण्डी। कुत्सितः प्रतिलोमजः। दासाः कैवर्त्तादयइत्यधिकारिनियमः। तथा गोमयेन मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थाप यित्वा पाययेदिति च नारदवचनादवगन्तव्यम्। यथाह।

तमाङ्क्याभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम्। आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयमिति। ननु तुलादिषु विषान्तेषु समनन्तरमेव शुद्ध्यशुद्धिविभावना कोशे तु कथमित्यतआह ॥ ११४ ॥

अर्व्वाक् चतुर्द्दशादह्नोयस्य नो राजदैविकं।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ ११५॥

चतुर्द्दशादह्नः पूर्व्वं यस्य राजिकं राजनिमित्तं दैविकं देवप्रभवं व्यसनं दुःखङ्घोरं महत् नो नैव जायते। अल्पस्य देहिनामपरिहार्य्यत्वात्स शुद्धोभवेदित्यर्थः। ऊर्द्धं पुनरवधेर्न दोषः॥

यथाह नारदः। ऊर्द्धं यस्य दिसप्ताहाद्वैकृतन्तु महद्भवेत्। नाभियोज्यःस विदुषा कृतकालव्यतिक्रमादित्यर्थसिद्धमेवोक्तं। अर्व्वाक्चतुर्द्दशादह्नइत्येतन्महाभियोगविषयम्। महाभियोगेष्वेतानीति प्रस्तुत्याभिधानात्। अवध्यन्तराणि पितामहेनोक्तान्यल्पविषयाणि कोशमल्पेऽपि दापयेदितिप्रकरणात्। तानि च त्रिरात्रात्सप्तरात्राद्द्वादशाहाद्वा द्विसप्तकात्। वैकृतं यस्य दृश्येत पापकृत्स उदाहृतइति। महाभियोगोत्कृष्ट्याद्‌र्व्वाचीनद्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम्॥ इतिकोशविधिः॥ ० ॥

तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि। स्मृत्यन्तेतु स्वल्पाभियोगविषयाण्यन्यान्यपि दिव्यानि कथितानि॥

यथाह पितामहः। तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम्। चौरेतु तण्डुला देया नान्यत्रेति विनिश्चयः॥ तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित्। मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः॥ स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्। प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्॥ तण्डुलान् भक्षयित्वातु पत्रे निष्ठीवयेत्ततः। पिप्पलस्यतु नान्यस्य अभावे भूर्जएवतु॥ लोहितं दृश्यते यस्य हनुस्तालु च शीर्य्यते। गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्द्दिशेत् इति॥ शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत्प्राड्विवाकः भक्षयित्वेति च स्नानाशिरूपम्। सर्व्वदिव्यसाधारणञ्च धर्मावाहनादिपूर्व्ववदिहापि कर्त्तव्यम्॥ इतितण्डुलविधिः॥ तप्तमाषविधिः पितामहेनोक्तः। तथाहि॥

सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम्। चतुरङ्गुलखातन्तु मृन्मयं वाथ मण्डलम्। वर्तुलमित्यर्थः॥ पूरयेत् घृततैलाभ्यां विंशत्यातु पलैस्तु तत्। सुवर्णमाषकन्तस्मिन् सुतप्ते निक्षिपेत्ततः॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम्। कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते॥ शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिरिति। उद्धरेदिति वचनात्पात्रादुत्क्षेपणं

न वह्निःप्रक्षेपणमादरणीयम्। अपरः कल्पः सौवर्णे राजते ताम्रे आयसेमृन्मयेऽपिवा। गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः॥ सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम्। सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम्॥ भ्रमद्वीचीतरङ्गाढ्ये ह्यनखस्पर्शगोचरे। परीक्षेतार्द्रपर्णेन चुरुकारं सघोषकम्॥ ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत्। परम्पवित्रमधिकं घृत त्वं यज्ञकर्मसु॥ दह पावक पापं त्वं हिमशीतं शुचौ भव। उपोषितं ततः स्नातमार्द्रवाससमागतम्॥ ग्राहयेन्मुद्रिकान्तन्तु घृतमध्यगतान्तथा। प्रदेशिनीञ्च तस्याथ परीक्षेयुः परीक्षकाः॥ यस्य विस्फोटकान स्युः शुद्धोसावन्यथा शुचिरिति। अत्रापि धर्म्मावाहनाद्यनुसन्धातव्यम्। घृतानुमन्त्रणं प्राड्विवाकस्य। त्वमग्ने सर्व्वभूतानामिति शोध्यस्याप्यभिमन्त्रणमन्त्रः प्रदेशिनीम्परीक्षेयुरिति वचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम्॥ इति तप्तमाषविधिः॥ ०॥

धर्म्माधर्म्माख्यदिव्यविधिश्च पितामहेनोक्तः। तथाच। अधुना सम्प्रवक्ष्यामि धर्म्माधर्म्मपरीक्षणम्। हन्तॄणां याचमानानाम्प्रायश्चित्तार्थिनां नृणाम्॥ हन्तॄणामिति साहसाभियोगेषु याचमानानामित्यर्थाभियोगेषु प्रायश्चित्तार्थिनामिति पातकाभियोगेषु। राजतं कारयेद्धर्ममधर्म्मं सीसकायसमिति प्रतिमाविधानम् सीसकं वायसम्वेति। पक्षान्तरमाह। लिखेद्भूर्जे पटे वापि धर्म्माधर्म्मौ सितासितौ। अभ्युक्ष्य पञ्चगव्येन

गन्धमाल्यैः समर्चयेत् ॥ सितपुष्पस्तु धर्म्मः स्यादधर्म्मोऽसित पुष्पधृक्। एवं विधायोपलिख्य पिण्डयोस्तौ निधापयेत्॥ गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः। मृद्भाण्डकउपहृते स्थाप्यौ चानुपलक्षितौ ॥ उपलिप्ते शुचौ देशे देवब्राह्मण सन्निधौ। आवाहयेत्ततोदेवान् लोकपालांश्च पूर्व्ववत्॥ धर्म्मावाहनपूर्व्वन्तु प्रतिज्ञापत्रकं लिखेत्। ततः। यदि पापविमुक्तोऽहं धर्म्मस्त्वायातु मे करे। अशुद्धश्चेन्ममकरे पापमायातु धर्म्मत इत्यभिशाप्य लोमन्त्रयते। अभियुक्तस्तयोश्चैकां प्रगृह्णीत विलम्बितः धर्म्मे गृहीते शुद्धः स्यादधर्म्मेतु स हीयते। एवं समासतः प्रोक्तं धर्म्माधर्म्मपरीक्षणमिति ॥ इतिधर्म्माधर्म्मदिव्यविधिः ॥

अन्ये च शपथाद्व्याल्पलमहत्त्वविषयजातिविशेषविषयाश्च मन्वादिभिरुक्ताः। ते यथा ॥

निष्केतु सत्यवचनं द्विनिष्के पादलम्भनं। त्रिकादर्व्वाक् तु पुण्यं स्यात्कोशपानमतःपरम् ॥ सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैरित्यादयः। अत्र च शुद्धिविभावना मनूक्ता। न चार्त्तिमृच्छति क्षिप्रं ज्ञेयः स शपथे शुचिरिति। आर्त्तिरपि यस्य रोगाग्निदैविकं व्यसनं जायते घोरमित्युक्तैव। कालनियमश्च। एकरात्रमारभ्य त्रिरात्रपर्य्यन्तं त्रिरात्रमारभ्य पञ्चरात्रपर्य्यन्तं। एकरात्र प्रभृतित्वं कार्य्यलाघवगौरवपर्य्यालोचनया द्रष्टव्यम्। एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोदर्शितः कात्यायनेन ॥

मताद्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेदिति। तं दण्डमाह।
विषे तोये हुताशे च तुलाकोशे च तण्डुले। तप्तमाषकदिव्ये च
क्रमाद्दण्डं प्रकल्पयेत्। सहस्रं षट्शतञ्चैव तथा पञ्चशतानि तु।
चतुस्त्रिद्व्येकमेवन्तु हीनं हीनेषु कल्पयेदिति। निह्नवे भावितो
दद्यादित्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते। इति
दिव्यप्रकरणम् ॥०॥

प्रमाणं मानुषं दैवमिति भेदेन वर्णितम्। अधुना वर्ण्यते
दायविभागो योगमूर्त्तिना॥ तत्र दायशब्देन यद्धनं स्वामि
सम्बन्धादेव निमित्तादन्यस्य स्वम्भवति तदुच्यते। स च द्विविधः
अप्रतिबन्धः सप्रतिबन्धश्च। तत्र पुत्राणां पौत्राणाञ्च पुत्रत्वेन
पौत्रत्वेनच पितृधनं पितामहधनञ्च स्वम्भवतीत्यप्रतिबन्धो
दायः। पितृव्यभ्रातादीनान्तु पुत्राभावे स्वाम्यभावे च स्वम्भव
तीति पुत्रसद्भावः स्वामिसद्भावश्च प्रतिबन्धस्तदभावे भ्रातृत्वे
नच पितृव्यत्वेन च स्वम्भवतीति सप्रतिबन्धो दायः। एवं तत्पुत्रा
दिष्वप्यूहनीयः। विभागो नाम द्रव्यसमुदायविषयाणामनेक
स्वाम्यानान्तदेकदेशेषु व्यवस्थापनम्। एतदेवाभिप्रेत्योक्तम्
नारदेन। विभागोऽर्थस्य पैत्र्यस्य तनयैर्यत्र कल्पते। दायभाग
इति प्रोक्तं व्यवहारपदं बुधैरिति। पैत्र्यस्येति स्वत्वनिमित्त
सम्बन्धोपलक्षणं तनयैरित्यपि प्रत्यासन्नोपलक्षणम्। इदमिह
निरूपणीयम्। कस्मिन् काले कस्य कथं कैश्च विभागः कर्त्तव्य
इति। तत्र कस्मिन् काले कथं कैश्चेति तत्र तत्र श्लोकव्याख्यान एव

वक्ष्यते कस्य विभाग इत्येतावदिह चिन्त्यते। किं विभागात्स्वत्व मुतस्वस्य सतो विभाग इति। तत्र स्वत्वमेव तावन्निरूप्यते किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति। तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तं गौतमवचनात्। स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति प्रमाणान्तरगम्ये स्वत्वे नेदं वचनमर्थवत्स्यात्। तथा स्तेनातिदेशे मनुः योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्। याजनाध्यापने नापि यथा स्तेनस्तथैव स इत्यदत्तादायिनः सकाशात् याजनादिकारणेन द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे। अपि च। लौकिकं चेत्स्वत्वं मम स्वमपहृतमनेनेति न ब्रूयात्। अपहर्तुरेव स्वत्वाद्यथान्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम्। एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात्तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति। अत्रोच्यते। लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात्। व्रीह्यादिवत्। आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनमस्ति। नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव। नैतत् नहि तत्राहवनीयादिरूपेण पाकादिसाधनत्वं किन्तर्हि प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण। इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैव। नहि यस्य यत्स्वं न भवति स तस्य क्रया

ष्टर्थक्रियां साधयति। अपिच प्रत्यन्तवासिनामप्यदृष्टशास्त्र व्यवहाराणां स्वत्वव्यवहारोदृश्यते क्रयविक्रयादिदर्शनात्। किञ्च। नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदोमन्यन्ते तथाहि। लिप्सासूत्रे तृतीयवर्णके द्रव्यार्ज्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात्स्वत्वस्यालौकिकत्वादिति पूर्व्वपक्षासम्भवमाशंक्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्व्वपक्षः समर्थितो गुरुणा। ननु द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति यागएव न सम्वर्त्तेत। प्रलपितमिदं केनापि अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति वदता तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजन मुक्तम्। अतोनियमातिक्रमः पुरुषस्य न क्रतोरिति। अस्य चार्थएवं विवृतः। यथा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिः। नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्व्व पक्षे। सिद्धान्तेतु अर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणा र्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति। पुरुषस्यैव नियमातिक्रमा द्दोषइति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्। अन्यथा क्रतुसिद्ध्यभावात्न चैतावता चौर्य्यादिप्राप्तस्यापि स्वत्वं स्या दिति मन्तव्यम्। लोके तत्र स्वत्वप्रसिद्ध्यभावाद्व्यवहारविसम्वा दात्। एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते ब्राह्मणस्य प्रतिग्रहादयउपायाः। क्षत्रियस्य विजितादयउपायाः

वश्यस्य कृष्यादयः शूद्रस्य शुश्रूषादयइत्यंदृष्टार्थानियमाः।
रिक्थादयस्तु सर्व्वसाधारणाः। स्वामी रिक्थक्रयसम्विभाग
परिग्रहाधिगमेष्वित्युक्ताः। तत्राप्रतिबन्धोदायोरिक्थम्।
क्रयः प्रसिद्धः सम्विभागः सप्रतिबन्धोदायः। परिग्रहोनन्य
पूर्व्वस्य जलतृणकाष्ठादेः स्वीकारः। अधिगमोनिध्यादेः प्राप्तिः।
एतेषु निमित्तेषु सत्सु स्वामी भवति। ज्ञातेषु ज्ञायते स्वामी
ब्राह्मणस्याधिकं लब्धमिति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं
तदधिकमसाधारणम्। क्षत्रियस्य विजितमित्यत्राधिकमित्य
नुवर्त्तते क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम्॥

निर्विष्टं वैश्यशूद्रयोरिति। अत्राप्यधिकमित्यनुवर्त्तते वैश्यस्य
कृषिगोरक्षादिलब्धन्निर्विष्टन्तदसाधारणं शूद्रस्य द्विजशुश्रूषा
दिना भृतिरूपेण यल्लब्धन्तदसाधारणमेवमनुलोमजानाम्प्रति
लोमजानाञ्च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यसाधारणमुक्तं
सूतानामश्वसारथ्यमित्यादि तत्तत्सर्व्वं निर्विष्टशब्देनोच्यते
सर्व्वस्यापि भृतिरूपत्वात्। निर्वेशोभृतिभोगयोरिति त्रिकाण्डी
स्मरणात्। तत्तदसाधारणं वेदितव्यम् यदपि पत्नीदुहितर
श्चेत्यादिस्मरणम् तत्रापि स्वामिसम्बन्धितया बहुषु दाय
विभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं
स्मरणमिति सर्व्वमनवद्यम्। यदपि मम स्वमनेनापहृतमिति
न ब्रूयात्स्वत्वस्य लौकिकत्वइति तदप्यसत्। स्वत्वहेतुभूतक्रया
दिसन्देहात्स्वत्वसन्देहोपपत्तेः विचारप्रयोजनन्तु॥

यद्गर्हितेनार्जयन्ति कर्म्मणा ब्राह्मणाधनं। तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव चेति॥

शास्त्रैकसमधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्राणान्तद्विभाज्यमेव। यदातु स्वत्वं लौकिकं तदा असत्प्रतिग्रहादिना लब्धस्यापि स्वत्वात् तत्पुत्राणान्तद्विभाज्यमेव तस्योत्सर्गेण शुध्यन्तीति प्रायश्चित्तमर्जयितुरेव तत्पुत्रादीनान्तु दायत्वेन स्वमिति न तेषां दोषसम्बन्धः॥

सप्तवित्तागमाधर्म्म्यादायोलाभः क्रयोजयः। प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रहएवचेति मनुस्मरणात्। इदानीमिदं सन्दिह्यते। विभागात्स्वत्वमुतस्वस्य सतोविभाग इति। तत्र विभागात्स्वत्वमितितावत् युक्तम्। जातपुत्रस्याधानविधानात् यदि जन्मनैव स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापितत्स्वंसाधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारः स्यात्। तथाविभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिषेधोनोपपद्यते। सर्व्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात्। यथाह॥

शौर्य्यभार्य्याधने चोभे यच्च विद्याधनम्भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादोयश्च पैतृकइति॥

तथा भर्त्राप्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत्। सा यथाकाममश्नीयाद्दद्यादा स्थावरादृतइति। प्रीतिदान

वचनस्योपपद्यते जन्मनैव स्वत्वे। न च स्थावराद्दते यद्दत्तमिति सम्बन्धो युक्तोऽव्यवहितयोजनासम्भवात्॥

यदपि मणिमुक्ताप्रवालानां सर्व्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्व्वस्य न पिता न पितामहः। तथा पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थावरन्तु न भुज्येत प्रसादे सति पैतृकइति स्थावरस्य प्रसाद्दानप्रतिषेधवचनन्तत्पितामहोपात्तस्थावरविषयम्। अतीते पितामहे तद्धनम्पितापुत्रयोः साधारणमपि मणिमुक्तादि पितुरेव स्थावरन्तु साधारणमित्यस्मादेव वचनादवगम्यते तस्मान्न जन्मना स्वत्व किन्तु स्वामिनाशाद्विभागाद्वा स्वत्वं। अतएव पितुरूर्द्धं विभागात्प्राग्द्रव्यस्वत्वस्य विद्दीनत्वादन्येन गृह्यमाणं न निवार्य्येतेति चोद्यस्यानवकाशः। तथैकपुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्षतइति। अत्रोच्यते। लोकप्रसिद्धमेव स्वत्वमित्युक्तम्। लोके च पुत्रादीनाञ्जन्मनैव स्वत्वम्प्रसिद्धतरन्नापह्नवमर्हति। विभागशब्दस्य बहुस्वामिकधनविषयो लोकप्रसिद्धो नान्यदीयविषयो न प्रहीणविषयः तथोत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्य्याइति गौतमवचनाच्च। मणिमुक्ताप्रवालानामित्यादिवचनञ्च जन्मना स्वत्वपक्षएवोपपद्यते। नच पितामहोपात्तस्थावरविषयमिति युक्तम्। न पिता न पितामहइति वचनात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यदेयमिति वचनञ्जन्मना स्वत्वञ्च

मयति। यथा परमते मणिमुक्तावस्त्राभरणादीनां पैतामहा नामपि पितुरेव स्वत्वं वचनादेवमस्मिन्मतेपि पित्रार्जितानामप्येतेषाम्पितुर्द्दानाधिकारोवचनादित्यविशेषः। यत्तु भर्त्त्रा प्रीतेनेत्यादि विष्णुवचनं स्थावरस्य प्रीतिदानस्यापवल्लस्वोपार्जितस्यापि पुत्राद्यनुज्ञानदति व्याख्येयम्। पूर्व्वोक्तैर्मणिमुक्तादिवचनैः स्थावरव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात्। यद्प्यर्थवाध्येषु वैदिकेषु कर्म्मसु अनधिकारइतिं तत्र तद्विधानवलादेवाधिकारोगम्यते। तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्। तथापि पितुरावश्यकेषु धर्म्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमोक्षादिषुच स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम्। स्थावरेतु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव॥

स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम्। असम्भूयसुतान्सर्व्वान् न दानञ्च विक्रयः॥ ये जाता येऽप्यजातास्च येच गर्भे व्यवस्थिताः। वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानन्न च विक्रय इत्यादिस्मरणात्॥ अस्यापवादः॥

एकोपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्म्मार्थेच विशेषत इति॥ अस्यार्थः। अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु चानुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सर्व्वकुटम्बव्यापिन्यामापदि तत्पोषणे चाव

अवश्यकर्त्तव्येषु च पितृश्राद्धादिषु स्थावरस्य दानाधमन विक्रयमेकोपि समर्थः कुर्य्यादिति। यत्तुमनुवचनं॥

अविभक्ताविभक्तावा सपिण्डाः स्थावरे समाः। एकोह्यनीशः सर्व्वत्र दानाधमनविक्रयइति। तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात्सर्व्वाभ्यनुज्ञा अवश्यं कार्य्या विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्य्याय सर्व्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेनातोविभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिध्यत्येवेति व्याख्येयं। यदपि॥

स्वग्रामज्ञातिसामन्तदायादानुमतेन च। हिरण्योदकदानेन षड्भिर्गच्छति मेदिनीति॥

तत्रापि ग्रामानुमतिः। प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतइति स्मरणाद्व्यवहारप्रकाशनार्थमेवापेक्षते न पुनर्ग्रामानुमत्या विना व्यवहारासिद्धिः सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासाय। ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव हिरण्योदकदानेनेति। स्थावरे विक्रयोनास्ति कुर्य्यादाधिमनुज्ञयेति। स्थावरस्य विक्रयप्रतिषेधात्॥

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति। उभौ तौ पुण्यकर्म्माणौ नियतौ स्वर्गगामिनाविति॥

दानप्रशंसादर्शनाच्च। विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्य्यादित्यर्थः। पैतृके पैतामहे च धने जन्मनैव स्वत्वेपि विशेषं भूर्य्या पितामहोपात्तेत्यत्र

वक्ष्यामः। इदानीं यस्मिन्काले येन च यथाविभागः कर्त्तव्य स्तद्दर्शयन्नाह ॥११५॥

विभागञ्चेत्पिता कुर्य्यात्स्वेच्छया विभजेत्सुतान्।
ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनः॥११६॥

यदा विभागम्पिता चिकीर्षति तदा इच्छया विभजेत्पुत्रा नात्मनः सकाशात्पुत्रं पुत्रौ पुत्रान् इच्छया निरंकुशत्वादनि यमप्राप्तौ नियममाह॥ ज्येष्ठम्वा श्रेष्ठभागेनेति। ज्येष्ठं श्रेष्ठ भागेन मध्यमं मध्यमभागेन कनिष्ठं कनिष्ठभागेन विभजेदित्य नवर्त्तते। श्रेष्ठविभागश्च मनुनोक्तः॥

ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम्। ततोर्द्धं मध्यमस्य स्यात् तुरीयन्तु यवीयस इति। वाशब्दोवक्ष्यमाणपक्षापेक्षः। सर्व्वे वा स्युः समांशिनः। सर्व्वे वा ज्येष्ठादयः समांशभाजः कर्त्तव्याः। अयञ्च विषमोविभागः स्वार्ज्जितद्रव्यविषयः। पितृ क्रमायाते तु समस्वाम्यस्य वक्ष्यमाणत्वान्नेच्छया विषमो विभागोयुक्तः। विभागञ्चेत्पिता कुर्य्यादिति यदा पितुर्व्विभा गेच्छा स तावदेकः कालः। अपरोपि जीवत्येव पितरि द्रव्य निस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम्पितुरनि च्छायामपि पुत्रेच्छयैव विभागोभवति॥

यथोक्तं नारदेन। अतऊर्द्धं पितुः पुत्राविभजेयुर्धनं सम मिति पित्रोरूर्द्धं विभागम्प्रतिपाद्य मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च निवृत्ते चापि रमणे पितर्य्युपरतस्पृह इति दर्शितः। अत्र पुत्राधनं समं विभजेयुरित्यनुषज्यते गौतमेनापि। ऊर्द्धं पितुः पुत्रारिक्थं विभजेरन्नित्युक्त्वा निवृत्ते चापि रजसीति द्वितीयः कालोदर्शितः। जीवति चेच्छतीति तृतीयः कालो दर्शितः। तथा सरजस्कायामपि मातर्य्यनिच्छत्यपि पितर्य्य धर्मवर्त्तिनि दीर्घरोगग्रस्ते च पुत्राणामिच्छया भवति विभागः॥

यथाह शङ्खः। अकामे पितरि रिक्थविभागोवृद्धे विप रीतचेतसि रोगिणीचेति। पितुरिच्छया विभागोद्विधा दर्शितः। समोविषमश्च। तत्र समविभागे विशेषमाह॥ ११६॥

यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः। न दत्तं स्त्रीधनं यासाम्भर्त्रा वा श्वशुरेण वा॥११७॥

यदा स्वेच्छया पिता सर्व्वानेव सुतान् समभागिनः करोति तदा पत्न्यश्च पुत्रसमांशभाजः कर्त्तव्याः। यासाम्पत्नी नाम्भर्त्रा श्वशुरेण वा स्त्रीधनन्न दत्तन्दत्ते तु स्त्रीधने अर्द्धांशं

वच्छति ॥ इत्ये तद्धै प्रकल्पयेदिति ।.यदा तु श्रेष्ठभागादिना ज्येष्ठादीन् विभजति तदा पत्न्यः श्रेष्ठादिभागान् लभन्ते किन्तु द्धृतोद्धारात्समुदायात्समानेवांशान् लभन्ते षोद्धारन्तु ॥

यथाह्यापस्तम्बः। परीणाहश्च गृहेऽलङ्कारोभार्य्याया इति। ज्येष्ठस्वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनइति। पञ्चदशेऽप्यप वादमाह ॥ ११७ ॥

## शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक् क्रिया।

स्वयमेव द्रव्यार्ज्जनसमर्थस्य पितृद्रव्यमनीहमानस्यानि च्छतोयत्किञ्चिदसारमपि दत्वा पृथक्क्रियाविभागः कर्त्तव्यः पित्रा । तत्पुत्रादीनान्दायजिघृक्षा माभूदिति । ज्येष्ठस्वा श्रेष्ठभागेनेति न्यूनाधिकविभागोदर्शितस्तच्च शास्त्रोक्तोद्धारादि विषमविभागव्यतिरिक्तोन्यथाविषमविभागनिषेधार्थमाह ॥

## न्यूनाधिकविभक्तानान्धर्म्यः पितृकृतः स्मृतः ॥११८॥

न्यूनाधिकविभागेन विभक्तानाम्पुत्राणामसौ न्यूनाधिक विभागोयदि धर्म्यः शास्त्रोक्तोभवति तदासौ पितृकृतः कृतएव न निवर्त्ततइति मन्वादिभिः स्मृतः अन्यथा तु पितृकृतोऽपि निवर्त्ततइत्यभिप्रायः ॥

यथाह नारदः। व्याधितः कुपितश्चैव विषयासक्तमानसः।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुरिति ॥

इदानीं विभागस्य कालान्तरं कर्त्रन्तरं प्रकारनियमञ्चाह ॥ ११८ ॥

विभजेरन् सुताः पित्रोरूर्द्धं रिक्थमृणं समम् ॥

पित्रोर्मातापित्रोरूर्द्धं प्रयाणादिति कालो दर्शितः। सुता इति कर्त्तारो दर्शिताः समिति प्रकारनियमः सममेवेति रिक्थमृणञ्च विभजेरन्। ननूर्द्धं पितुश्च मातुश्चेत्युपक्रम्य ज्येष्ठ एव तु गृह्णीयात् पित्र्यन्धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरं तथेत्युक्त्वा ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरं ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयस इति सर्व्वस्माद्द्रव्यसमुदायाद्विंशतितमो भागः सर्व्वद्रव्येभ्यश्च यच्छ्रेष्ठं तत् ज्येष्ठाय दातव्यन्तदर्द्धं चत्वारिंशत्तमो भागो मध्यमस्य द्रव्यं मध्यमाय दातव्यं। तुरीयमशीतितमो भागो हीनद्रव्यञ्च कनिष्ठाय दातव्यमिति। मातापित्रोरूर्द्धं विभजतामुद्धारभागो मनुना दर्शितः। तथा उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना। एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः। अंशमंशं यवीयांस इति धर्मो व्यवस्थित इति। ज्येष्ठस्य द्वौ भागौ तदनन्तरजातस्य सार्द्धमेको भागस्ततोऽनुजानामेकैको विभाग इत्युद्धारव्यतिरेकेणापि विषमो

त्रिभागोदर्शितः। पित्रोरूर्द्धं विभजतां जीवद्विभागे च स्वयमेव विषमोविभागोदर्शितः। ज्येष्ठस्वा श्रेष्ठभागेनेति। अतः सर्व्वस्मि न्नपि काले विषमोविभागोऽस्तीति कथं सममेव विभजेरन्निति नियम्यते। अत्रोच्यते। सत्यमयं विषमोविभागः शास्त्रदृष्ट स्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः। अस्वर्ग्यं लोकविद्विष्टं धर्म्म मप्याचरेन्नत्विति निषेधात्॥ यथा॥ महोक्षम्वा महाजम्वा श्रोत्रियाय प्रकल्पयेदिति। विधानेऽपि लोकविद्विष्टत्वादननुष्ठानं यथा वा मैत्रावरुणीं गां वशामनुबन्ध्यामालभेत इति गवा लम्भनविधानेऽपि लोकविद्विष्टत्वादननुष्ठानम्॥ उक्तञ्च यथा नियोगधर्म्मोनो नानुबन्ध्यावधोऽपि वा। ततोद्धारविभागोऽपि नैव सम्प्रतिवर्त्ततइति॥

आपस्तम्बोऽपि। जीवन्पुत्रेभ्योदायं विभजेत्सममिति स्वमत मुक्ता ज्येष्ठोदायादइत्येकइति कृत्स्नधनग्रहणं ज्येष्ठस्यैकीयमते नोपन्यस्य देशविशेषे सुवर्णं कृष्णा गावः कृष्णभौमं ज्येष्ठस्य रथः पितुः परिभाण्डं गृहेऽलङ्कारोभार्य्यायाज्ञातिधनञ्चे कीयमते नैवोद्धारविभागन्दर्शयित्वा तच्छास्त्रविप्रतिषिद्ध मिति निराकृतवान्। तच्च शास्त्रविप्रतिषेधं स्वयमेव दर्शयति स्म मनुः। पुत्रेभ्योदायं विभजेदित्यविशेषेण श्रूयतइति तस्मा द्विषमोविभागः शास्त्रदृष्टोऽपि लोकविरोधात्श्रुतिविरोधाच्च नानुष्ठेयइति सममेव विभजेरन्निति नियम्यते। मातापित्रो रूर्द्धं स्ताविभजेरन्नित्युक्तन्तच मातृधनेऽपवादमाह॥०॥

## मातुर्दुहितरः शेषमृणात्

मातुर्धनं दुहितरो विभजेरन्। ऋणाच्छेषं मातृकृतर्णापाकरणावशिष्टं। अतश्चर्णसमं न्यूनं वा मातृधनं वा सुता विभजेरन्नित्यस्य विषयः। एतदुक्तं भवति। मातृकृतर्णं पुत्रैरेवापाकरणीयं न दुहितृभिः ऋणावशिष्टन्तु धनं दुहितरो गृह्णीयुरिति। युक्तञ्चैतत्। पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रिया इति स्त्र्यवयवानां दुहितृषु बाहुल्यात्स्त्रीधनं दुहितृगामि पितृधनं पुत्रगामि पित्रवयवानां पुत्रेषु बाहुल्यादिति। तत्र च गौतमेन विशेषो दर्शितः॥

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति। अस्यार्थः प्रत्ताप्रत्तासमवाये अप्रत्तानामेव स्त्रीधनं प्रत्तासु च प्रतिष्ठिता अप्रतिष्टिता समवाये ऽप्रतिष्ठितानामेवेति। अप्रतिष्ठिता निर्धनाः दुहित्रभावे मातृधनमृणावशिष्टं को गृह्णीयादित्यत आह॥०॥

## ताभ्यऋते ऽन्वयः॥११९॥

ताभ्यां दुहितृभ्यो विना दुहितॄणामभावे अन्वयः पुत्रादिर्गृह्णीयात्। एतच्च विभजेरन् सुताः पित्रोरूर्द्धमित्यनेनैव सिद्धं स्पष्टार्थमुक्तम्। अविभाज्यमाह॥११६॥

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्।
मैत्रमौद्वाहिकञ्चैव दायादानान्न तद्भवेत्॥ १२०॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः। दाया
देभ्यो न तद्दद्याद्विद्यया लब्धमेव च॥ १२१॥

मातापित्रोर्द्रव्याविनाशेन यत्स्वयमर्जितं मैत्रं मित्रसकाशा ल्लब्धमौद्वाहिकं विवाहलब्धं दायादानां भ्रातृणान्तन्न भवेत्। क्रमात्पितृक्रमायातं यत्किञ्चिद्द्रव्यमन्यैर्हृतमसामर्थ्या दिना पित्रादिभिरनुद्धृतम्। यः पुत्राणां मध्ये इतराभ्यनुज्ञ योद्धरति तद्दायादेभ्यो भ्रात्रादिभ्यो न दद्यात्। उद्धर्त्तैव गृह्णीयात्। तत्र क्षेत्रे तुरीयांशमुद्धर्त्ता लभते शेषन्तु सर्व्वेषां सममेव॥

यथाह शङ्खः। पूर्व्वनष्टान्तु योभूमिमेकश्चेदुद्धरेत्क्रमात्। यथा भागं लभन्तेऽन्ये दत्त्वांशन्तु तुरीयकमिति। क्रमादभ्यागत मिति शेषः। तथा विद्यया वेदाध्ययनेनाध्यापनेन वेदार्थव्याख्या नेन वा यल्लब्धन्तदपि दायादेभ्यो न दद्यादर्जक एव गृह्णी यात्। अत्र च पितृद्रव्याविरोधेन यत्किञ्चित्स्वयमर्जितमिति सर्व्वशेषः। अतश्च। पितृद्रव्याविरोधेन यन्मैत्रमर्जितं पितृ द्रव्याविरोधेन यदौद्वाहिकं पितृद्रव्याविरोधेन यत्क्रमायातं पितृद्रव्याविरोधेन विद्यया यल्लब्धमिति प्रत्येकमभिसम्बध्यते।

तथाच पितृद्रव्यविरोधेन प्रत्युपकारेण यन्मैत्रम्। आसुरादि विवाहेषु यल्लब्धम्। तथा। पितृद्रव्यव्ययेन यत्क्रमायातमुद्धृतं तथा पितृद्रव्यव्ययेन लब्धया विद्यया यल्लब्धन्तत्सर्व्वैः सर्वैर्भ्रातृभिः पित्रा च विभजनीयम्। तथा पितृद्रव्याविरोधेनेत्यस्य सर्व्वं शेषलादेव पितृद्रव्याविरोधेन प्रतिग्रहलब्धमपि विभजनीयं। अस्य च सर्व्वशेषत्वाभावे मैत्रमौद्वाहिकमित्यादिना लब्धव्यम्। अथ पितृद्रव्यविरोधेनापि यन्मैत्रादि लब्धन्तस्याविभाज्यताया मैत्रादि वचनमर्थवदित्युच्यते। तथा सति समाचारविरोधः विद्यालब्धे नारदवचनविरोधश्च॥

कुटुम्बं विभृयाद्भ्रातुर्यो विद्यामधिगच्छतः। भागं विद्या धनात्तस्मात्स लभेताश्रुतोऽपि सन्निति। तथा विद्याधनस्या विभाज्यस्य लक्षणमुक्तं कात्यायनेन॥

परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या। तया लब्धन्धनं यत्तु विद्याप्राप्तन्तदुच्यत इति। तथा पितृद्रव्याविरोधेनेत्यस्य भिन्नवाक्यत्वे प्रतिग्रहलब्धस्याविभाज्यत्वमाचारविरुद्धमाप द्येत एतदेव स्पष्टीकृतं मनुना॥

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत्। दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव चेति। श्रमेण सेवया युद्धादिना। ननु पितृद्रव्याविरोधेन यन्मैत्रादिलब्धन्तदविभाज्यमिति न वक्त व्यम्। विभागप्राप्त्यभावात्। यद्येन लब्धन्तत्तस्यैव नान्यस्येति प्रसिद्धतरम्। प्राप्तिपूर्व्वकश्च प्रतिषेधः। अत्र कश्चिदित्य माप्तिमाह॥ १२१॥

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।
भागोयवीयसां तत्र यदि विद्यानुपालिनः॥ १२२॥

इति ज्येष्ठोवा कनिष्ठोवा मध्यमोवा पितरि प्रेते अप्रेते वा यवीय साम्बर्णीयसा इति व्याख्यानेन पितरि सत्यपि च मैथा दीनां विभाज्यत्वं प्राप्तमतिनिषिध्यत इति तदसत्। नह्यत्र प्राप्तस्य प्रतिषेधः। किन्तु सिद्धस्यैवानुवादोऽयम्। लोकसिद्धस्यैवानुवा दकान्येव प्रायेणास्मिन प्रकरणे वचनानि। अथवा समवेतैस्तु यत्प्राप्तं सर्व्वै तत्र समांशिन इति। प्राप्तस्यापवाद इति सन्तुष्यतु भवान्। अतश्च यत्किञ्चित्पितरि प्रेत इत्यस्मिन्वचने ज्येष्ठादि पदाविवक्षया प्राप्तिरिति व्यामोहमात्रम्। अतोमैथादि वचनैः पितुः प्रागूर्द्धंवा विभाज्यत्वेनोक्तस्य यत्किञ्चित्पितरि प्रेत इत्यस्यापवाद इति व्याख्येयम्। तथान्यदप्यविभाज्यमुक्तं मनुना॥

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः। योगक्षेमं प्रचा रञ्च न विभाज्यं प्रचक्षते इति। धृतानामेव वस्त्राणामविभा ज्यत्वं यस्येन धृतन्तस्यैव। पितृधृतानि तु पितुरूर्द्धं विभ क्तां श्राद्धभोक्त्रे दातव्यानि॥

यथाह बृहस्पतिः। वस्त्रालङ्कारशय्यादि पितुर्य्यद्वाहना दिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेदिति। अभिनवानि तु वस्त्राणि विभाज्यान्येव। पत्रं वाहनमश्वत्रिवि

कारादि तदपि यद्येनाव्यूढं तत्तस्यैव पितृभुक्तं वस्त्रवदेव। अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव वैषम्येण विभाज्यते ज्येष्ठस्य अजाविकं सैकशफं जातु विषमं भजेत्। अजाविकं सैकशफं ज्येष्ठस्यैव विधीयत इति मनुस्मरणात्। अलङ्कारोऽपि योयेन धृतः स तस्यैव। अधृतः साधारणो विभाज्य एव। पत्यौ जीवति यः स्त्रीभिरलङ्कारोधृतोभवेत्। न तम्भजेरन् दायादाभजमानाः पतन्ति ते इति। अलङ्कारोधृतोभवेदिति विशेषणोपादानादधृतानां विभाज्यत्वं गम्यते। कृतान्नन्तण्डुलमोदकादि तदप्यविभाज्यं यथासम्भवं भोक्तव्यम्। उदकमुदकाधारः कूपादिः तच्च विषमं मूल्यद्वारेण न विभाज्यं पर्य्यायेणोपभोक्तव्यं स्त्रियश्च दास्योविषमामूल्यद्वारेण न विभाज्याः। पर्य्यायेण कर्म्म कारयितव्याः। अवरुद्धास्तु पित्रा स्वैरिण्याद्याः समा अपि पुत्त्रैर्न विभाज्याः। स्त्रीषु च संयुक्तास्वविभाग इति गौतमस्मरणात्। योगश्च क्षेमश्च योगक्षेमम्। योगशब्देनालब्धलाभकारणं श्रौतस्मार्त्ताग्निसाध्यमिष्टं कर्म्म लक्ष्यते। क्षेमशब्देन च लब्धपरिरक्षणहेतुभूतं बहिर्वेदिदानतडागारामनिर्म्माणादि पूर्त्तं कर्म्म लक्ष्यते। तदुभयम्पैतृकमपि पितृद्रव्यविरोधार्जितमप्यविभाज्यम्॥

यथाह लौगाक्षिः। क्षेमं पूर्त्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः। अविभाज्ये च ते प्रोक्ते शयनासनमेव चेति। योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपरोहितादय उच्यन्ते इति

केचित्। अस्मिन्पामरच्छेपानत्प्रम्हतयश्च्यन्तइत्यन्ये। प्रचारो गृहादिषु प्रवेशनिर्गममार्गः सोपि अविभाज्यः। यत्तूशनसा क्षेत्रस्य अविभाज्यत्वमुक्तम्॥

अविभाज्यं सगोत्राणामासहस्रकुलादपि। याज्यं क्षेत्रञ्च पत्रञ्च क्रतान्नमुदकं स्त्रियइति। तद्ब्राह्मणोत्पन्नक्षत्रियादिपुत्र विषयं॥

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्येषाम्पिता दद्यान्मृते विप्रासुतोहरेत् इति स्मरणात्। याज्यं याजन लब्धं। पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यते नियमातिक्रमस्या विभाज्यत्वमनन्तरमेव निराचि। पितृद्रव्यविरोधेन यदर्जि तन्नद्विभजनीयमिति स्थितं। तत्रार्जकस्य भागद्वयं वशिष्ठ वचनात्॥

येन चैषां स्वयमर्जितं स्यात् स द्व्यंशमेव लभेतेति। अस्याप वादमाह॥१२२॥

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः।

अविभक्तानां भ्रातॄणां सामान्यस्यार्थस्य कृषिवाणिज्यादिना सम्भूय समुत्थाने सम्यग्वर्द्धने केनचित्कृते समएव विभागो नार्जयितुरंशद्वयम्। पितृद्रव्ये पुत्राणां विभागोदर्शितः। इदा नीम्पैतामहे पौत्राणां विभागे विशेषमाह॥ • ॥

अनेकपितृकाणान्तु पितृतोभागकल्पना ॥ १२३ ॥

यद्यपि पैतामहे द्रव्ये पौत्राणां जन्मना स्वत्वम्पुत्रैरविशिष्ट
न्तथापि तेषाम्पितृद्वारेणैव पैतामहद्रव्ये विभागकल्पना न
स्वरूपापेक्षया। एतदुक्तम्भवति। यदा विभक्ता भ्रातरः पुत्रानु
त्पाद्य दिष्टं गतास्तत्रैकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार
इति पुत्राणां वैषम्ये तत्र द्वावेकं स्वपित्र्यमंशं लभेते। अन्ये त्रयो
ऽप्येकमंशं पित्र्यञ्चत्वारोऽप्येकमेवांशम्पित्र्यं लभन्त इति। तथा केषु
चित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्रानुत्पाद्य विनष्टेष्वप्ययमेव
न्यायो ध्रियमाणाः स्वानंशान् लभन्ते नष्टानामपि पुत्राः पित्र्या
नेवांशान् लभन्त इति वाचनिकी व्यवस्था। अधुना विभक्ते
पितर्य्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो
नास्ति अध्रियमाणे पितरि पितृतोभागकल्पनेत्युक्तत्वात्
भवतु वा स्वार्जितवत्पितुरिच्छयैवेत्याशङ्क्याह ॥ १२३ ॥

भूर्य्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।
तत्र स्यात्सदृशं स्वाम्यम्पितुः पुत्रस्य चैव हि ॥ १२४ ॥

भूः शालिक्षेत्रादिका। निबन्ध एकस्य पर्णभरकस्येयन्ति
पर्णानि। तथैकस्य क्रमुकफलभरकस्येयन्ति क्रमुकफलानीत्या

पुत्रलक्षणः। द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविज यादिलब्धन्तत्र पितुः पुत्रस्य च स्वाम्यं लोकप्रसिद्धमिति कृत्वा विभागोस्ति। हि यस्मात्तस्त्रद्रव्यं समानन्तस्मान्न पितुरिच्छयैव विभागोनापि पितुर्भागद्वयम्। अतश्च पिहतोभागकल्पने त्येतत्स्वाम्ये समेपि वाचनिकं विभागश्चेत्पिता कुर्य्यादित्येतत्स्व यमर्जितविषयं। तथा द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिते त्येतदपि स्वार्जितविषयम्। जीवतोरस्वतन्त्रः स्यात्जरयापि समन्वितइति एतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयं। तथानीशास्तेहि जीवतोरित्येतदपि। तथाच सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पितामहद्रव्यविभागोभवति। तथा विभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रियमाणे वा पौत्रस्य निषेधेप्यधिकारः। पित्रा र्जिते तु न निषेधाधिकारस्तत्परतन्त्रत्वादनुमतिस्तु कर्तव्या तथाहि पैतृके पैतामहेच स्वाम्यं यद्यपि जन्मनैव तथापि पैतृके पितृपरतन्त्रत्वात्। पितुस्तार्ज्जकत्वेन प्राधान्यात्पित्रा विनि युज्यमानेस्वार्ज्जितद्रव्ये पुत्राणामनुमतिः कर्त्तव्या। पैतामहेतु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोप्यस्तीति विशेषः। मनुरपि पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्। न तत्पुत्रैर्भ जेत्सार्द्धमकामः स्वयमर्जितमिति। यत्पितामहार्जितं केना प्यपहृतं पितामहेनानुधृतं यदि पितोद्धरति तत् स्वार्जितमिव पुत्रैः सार्द्धमकामः स्वयन्न विभजेदिति वदन् पितामहार्जित

मकामोपि पुत्रेच्छया पुत्रैः सह विभजेदिति दर्शयति । विभागोत्तरकालमुत्पन्नस्य पुत्रस्य कथं विभागकल्पना इत्यत आह ॥ १२४ ॥

विभक्तेषु सुतोजातः सवर्णायां विभागभाक्।

विभक्तेषु पुत्रेषु पश्चात्सवर्णायां भार्य्यायामुत्पन्नोविभागभाक्। विभज्यतइति विभागः। पित्रोर्भागस्तं भजतइति विभागभाक् पित्रोरूर्द्धन्तयोरंशं लभतइत्यर्थः । मातृभागं सत्यां दुहितरि मातुर्दुहितरं शेषमित्युक्तत्वात्। असवर्णायामुत्पन्नस्तु स्वांशमेव पित्र्याल्लभते मातृकन्तु सर्व्वमेव एतदेव मनुनोक्तम् । ऊर्द्धं विभागाज्जातस्तु पित्र्यमेवहरेद्धनमिति पित्रोरिदं पित्र्यमिति व्याख्येयम् । अनीशः पूर्व्वजः पित्रोर्भ्रातुर्भागे विभक्तजइति स्मरणात्। विभक्तयोः मातापित्रोर्भागे विभागात्पूर्व्वमुत्पन्नोन स्वामी विभक्तजस्य भ्रातुर्भागे न स्वामीत्यर्थः। तथा विभागोत्तरकालं पित्रा यत्किञ्चिदर्जितं तत्सर्व्वं विभक्तजस्यैव ॥

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्। विभक्तजस्य तत्सर्व्वमनीशाः पूर्व्वजाः स्मृताइति स्मरणात् । येच विभक्ताः पित्रा सह संसृष्टाः पितुरूर्द्धं तैः सार्द्धंम्विभक्तजोविभजेत्॥ यथाह मनुः ॥

संसृष्टांशेन वा ये स्युर्विभजेत स तैः सहेति पितुरूर्द्धं पुत्रेषु सत्स्वासुत्पन्नस्य कथं विभागकल्पनेत्यत आह ॥ ० ॥

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्॥१२५॥

तस्य पितरि प्रेते भ्रातृविभागसमये ऽस्पष्टगर्भायां मातरि भ्रातृविभागोत्तरकालमुत्पन्नस्य विभागस्तद्विभागः कुत इत्यत आह। दृश्यात् भ्रातृभिर्गृहीताद्धनात्कीदृशादायव्यय विशोधितात् आयः प्रतिदिवसप्रतिमासं प्रत्यब्दं वा यदुत्पद्यते व्ययः पितृकृतर्णापाकरणं ताभ्यामायव्ययाभ्यां यच्छोधितं तस्मादुद्धृत्य तद्भागोदातव्यः स्यात्। एतदुक्तं भवति प्राति स्विकेषु भागेषु तदुत्थमायं प्रवेश्य पितृकृतमृणमपनीयावशि ष्टेभ्यः स्वेभ्यः स्वेभ्योभागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः कर्त्तव्य इति। एतच्च विभागसमये अप्रजस्य भ्रातुर्भार्य्यायामस्पष्टगर्भायां विभागादूर्द्धमुत्पन्नस्यापि वेदि तव्यं स्पष्टगर्भायान्तु प्रसवं प्रतीक्ष्य विभागः कर्त्तव्यः। यथाह वशिष्ठः॥

अथ भ्रातृणां दायविभागोयास्त्वानपत्याः स्त्रियस्तासामा पुत्रलाभादिति। गृहीतगर्भाणामाप्रसवात्प्रतीक्षणीयमिति योजनीयम्। विभक्तजः पित्र्यं मातृकं च सर्व्वधनं गृह्णाती

त्युक्तम्। तत्र यदि विभक्तः पिता माता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति तत्र विभक्तजेन दानप्रतिषेधो न कर्त्तव्यो नापि दत्तमत्याहर्त्तव्यमित्याह॥ १२५॥

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्।

मातापितृभ्यां विभक्ताभ्यां पूर्व्वं विभक्तस्य पुत्रस्य यद्दत्तमलङ्कारादि तत्तस्यैव पुत्रस्य न विभक्तजस्य स्वं भवति। न्यायसाम्यात् विभागात्प्रागपि यस्य यद्दत्तं तत्तस्यैव तथाऽसति विभक्तजे विभक्तयोः पित्रोरंशमूर्द्ध्वं विभजतां यस्य यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम्। जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं यदि कुर्य्यात्समानंशानित्यादिना। पितुरूर्द्ध्वं विभागेऽपि पत्नीनां स्वपुत्रसमांशित्वं दर्शयितुमाह॥०॥

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्॥ १२६॥

पितुः प्रयाणादूर्द्ध्वं विभागेऽपि पत्नीनां स्वपुत्रांशसममंशं भवेत्। यदि स्त्रीधनं न दत्तम्। दत्ते त्वंशार्द्धहारिणीति वक्ष्यते। पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति तत्संस्कारे कोऽधिक्रियत इत्यत आह॥ १२६॥

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः।

पितुरूर्द्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदाय द्रव्येण संस्कर्त्तव्याः। असंस्कृतासु भगिनीषु विशेषमाह॥०॥

भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम्॥१२७॥

अस्यार्थः भगिन्यश्चासंस्कृताः संस्कर्त्तव्या भ्रातृभिः किंकृत्वा निजादंशाच्चतुर्थमंशं दत्वा अनेन दुहितरोपि पितुरूर्द्ध्वमंश भागिन्य इति गम्यते। तत्र निजादंशादिति प्रत्येकं परिकल्पिता दंशादुद्धृत्य चतुर्थोंशो दातव्य इत्ययमर्थो न भवति किन्तु यज्जा तीया कन्या तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्त्तव्या। एतदुक्तं भवति यदि ब्राह्मणी सा कन्या तदा ब्राह्मणी पुत्रस्य यावानंशो भवति तस्य चतुर्थोंशस्तस्या भवतीति। तद्यथा। यदि कश्चित् ब्राह्मण एव मृतो पुत्रश्चैकः कन्या चैका तत्र पित्र्यं सर्व्वमेव द्रव्यं द्विधा विभज्य तत्रैकभागश्चतुर्द्धा विभज्य। तुरीयमंशं कन्यायै दत्वा शेषम्पुत्रो गृह्णीयात् यदा तु द्वौ पुत्रौ एका कन्या तदा सर्व्वं पितृधनन्त्रिधा विभज्य तत्रैकम्भाग श्चतुर्द्धा विभज्य तुरीयमंशं कन्यायै दत्वा शेषं पुत्रौ विभज्य गृह्णीतः। अथ त्वेकः पुत्रो द्वे कन्ये तदा पितृधनन्त्रिधा विभज्यै

कभागश्चतुर्द्धा विभज्य तत्र द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्त्वा ऽवशिष्टं सर्व्वं पुत्रो गृह्णातीत्येवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम्। यदा तु ब्राह्मण्याः पुत्र एकः क्षत्रियाकन्यैका तत्र पितृद्रव्यं सप्तधा विभज्य क्षत्रियापुत्र भागांस्त्रीन् चतुर्द्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रिया कन्या चैका तत्र पितृद्रव्यं एकादशधा विभज्य तेषु क्षत्रिया पुत्रभागांस्त्रींश्चतुर्द्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वा शेषं सर्व्वं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः एवं जातिवैषम्ये भ्रातॄ णाम्भगिनीनाञ्च सङ्ख्यायाः साम्ये वैषम्ये च सर्व्वत्रोहनीयम्। अत्र दत्त्वांशन्तु तुरीयकमिति तुरीयांशाविवक्षया संस्कार मात्रोपयोगिद्रव्यन्दत्त्वेति व्याख्यानं युक्तम्। मनुवचनविरो धात्।

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्। स्वात्स्वादं शाच्चतुर्भागम्पतिताः स्युरदित्सवइति। अस्यार्थः ब्राह्मणादयो भ्रातरो ब्राह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहिते भ्योंऽशेभ्यश्चतुरोंऽशान् हरेद्विप्रइत्यादिवक्ष्यमाणेभ्यः स्वात्स्वा दंशादात्मीयात्मीयभागाच्चतुर्थं चतुर्थं भागन्दद्युः नचा त्मीयभागादुद्धृत्य चतुर्थोंशोदेयइत्युच्यते किन्तु स्वजाति विहितादेकस्मादंशात्पृथक् पृथगेकस्यै कन्यायै चतुर्थोंशो देयइति जातिवैषम्ये सङ्ख्यावैषम्ये च विभागक्लृप्तिरुक्तैव।

पतितास्युरदित्सवदित्यकरणे प्रत्यवायश्रवणाच्च सन्दातव्यता प्रतीयते। अत्रापि चतुर्भागवचनमविवक्षितं संस्कारोपयोगि द्रव्यदानमेव विवक्षितमिति चेन्न। स्मृतिद्वये चतुर्थांशदानाविवक्षायां प्रमाणाभावाददाने प्रत्यवायश्रवणाच्चेति यदपि कैश्चिदुच्यते। अंशदानविवक्षायां बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति। तदुक्तरीत्या परिहृतमेव। न ह्यत्रात्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते। येन तथा स्यादतोऽसहायमेधातिथिप्रभृतीनां व्याख्यानमेव चतुरस्रं न भ्रातुः चेत्तस्मात्पितुरूर्द्ध्वं कन्यायंशभागिनी पूर्व्वन्तु यत्किञ्चित्पिता ददाति तदेव लभते विशेषवचनाभावादिति सर्व्वमनवद्यं एवं विभागश्चेत्पिता कुर्य्यादित्यादिना प्रबन्धेन समानजातीयानां भ्रातृणाम्परस्परं पित्रा सह विभागक्लृप्तिरुक्ता। अधुना भिन्नजातीयानां विभागमाह॥ १२७॥

चतुस्त्रिद्व्येकभागाः स्युर्व्वर्णशो ब्राह्मणात्मजाः। क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः॥ १२८ ॥

तिस्रो वर्णानुपूर्व्येणेति ब्राह्मणस्य चतस्रः। क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति भार्य्या दर्शितास्तत्र ब्राह्मणात्मजा ब्राह्मणोत्पन्नाः वर्णशः वर्णशब्देन ब्राह्मणादिवर्णाः स्त्रिय

उच्यन्ते। यच्चैकवचनाच्च वीणायामित्यधिकरणकारका देकवचनादीप्सायां शस्। अतश्च वर्णे वर्णे ब्राह्मणोत्पन्ना यथा क्रमश्चतुस्त्रिद्व्येकभागाः स्युर्भवेयुः एतदुक्तं भवति। ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकश्चतुरश्चतुरो भागान् लभन्ते। तेनैव क्षत्रियायामुत्पन्नाः प्रत्येकं त्रीन् त्रीन्भागान् लभन्ते। वैश्यायां द्वौ द्वौ शूद्रायामेकमेकम्। क्षत्रजाः क्षत्रियोत्पन्नावर्णश इत्यनुवर्त्तते यथा क्रमं त्रिद्व्येकभागाः क्षत्रियेण क्षत्रियायामुत्पन्नाः प्रत्येकन्त्रीन् त्रीन् लभन्ते वैश्यायां द्वौ द्वौ शूद्रायामेकमेकम्। विड्जाविश्वैश्येनोत्पन्नाः अत्रापि वर्णश इत्यनुवर्तते। यथाक्रमं द्व्येकभागिनः वैश्येन वैश्याया मुत्पन्नाः प्रत्येकं द्वौ द्वौ भागौ लभन्ते। शूद्रायामेकमेकम्। शूद्रस्यैकैव भार्य्येति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्व्वोक्त एव विभागः। यद्यपि चतुस्त्रिद्व्येकभागा इत्यविशेषे णोक्तम्। तथापि प्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदं द्रष्टव्यं यतः स्मरन्ति।

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्येषां पिता दद्यान्मृते विप्रासुतोहरेदिति प्रतिग्रहग्रहणात् क्रयादिलब्धा भूः क्षत्रियादिसुतानामपि भवत्येव शूद्रापुत्रस्य विशेषप्रति षेधाच्च।

शूद्र्यां द्विजातिभिर्जातोन भूमेर्भागमर्हतीति यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवेत्तदा शूद्रा

पुत्रस्य विशेषप्रतिषेधोनोपपद्यते । यत्तुनर्ब्राह्मणक्षत्रियविशां शूद्रापुत्रोन दायभाक् । यदेवास्य पिता दद्यात्तदेवास्य धनं भवेदिति । तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रदत्तं स्यात्तद्विषयं यद्दात् प्रसाद्दानं नास्ति तदैकांश भागित्वविरुद्धं । अथ सर्व्वविभागशेषं किञ्चिदुच्यते ॥ १२८ ॥

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२९ ॥

परस्परापहृतं समुदायद्रव्यं विभागकाले वा ज्ञातं विभक्ते पितृधने यत् दृश्यते तत्समैरंशैर्विभजेरन्निति एवं स्थितिः शास्त्रमर्य्यादा । अत्र समैरंशैरिति वदता उद्धार विभागोनिषिद्धः । विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितं । एवञ्च वचनस्यार्थवत्त्वान्न समुदायद्रव्या पहारे दोषाभावपरत्वम् । ननु मनुना ज्येष्ठस्यैव समुदाय द्रव्यापहारे दोषोदर्शितोन कनीयसाम् ॥

योज्येष्ठोविनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः । सोज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिरिति वचनात् । नैतत् यतः सम्भावितस्यातथ्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं वदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपकरीत्या सुतरां दोषोदर्शितएव तथाचाविशेषेणैव दोषः श्रूयते ॥

यो वै भागिनं भागान्नुदते चयते चैनं स यदि चैनं न चयते अथ पुत्रं पौत्रं चयतइति । योभागिनं भागार्हं भागान्नुदते भागादपाकरोति भागमस्मै न प्रयच्छति स भागान्नुन्न एनं नोत्तारञ्चयते नाशयति दोषिणं करोति । यदि तन्न नाशयति तदा पुत्रं पौत्रं वा नाशयति इति ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्यापहारिणोदोषः श्रुतः अथ साधारणं द्रव्यमात्मनोपि सम्भवतीति स्वबुद्ध्या गृह्यमाणं न दोषमावहतीति मतम् । तदसत् । स्वबुद्ध्या गृहीतेऽपि वर्जनीयतया परस्वमपि गृहीतमेवेति निषेधानुप्रवेशाद्दोषमावहत्येव । यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेष्वयज्ञिया वै माषा इति निषेधोन प्रविशति । मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्व्वपक्षिणोक्ते मुद्गावयवेषु गृह्यमाणेषु वर्जनीयतया माषावयवा अपि गृह्यन्त एवेति निषेधः प्रविशत्येवेति राद्धान्तितोक्तम् । तस्मादचनतोन्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येवेति स्थितम् । द्व्यामुष्यायणस्य भागविशेषन्दर्शयंस्तस्य स्वरूपमाह ॥ १२९ ॥

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १३० ॥

अपुत्रां गुर्व्वनुज्ञातदूत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्य्यायां गुरुनियोगेनोत्पादितः पुत्र उभयो र्वीजिक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इत्यस्यार्थः। यदासौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रो अपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तोयं जनयति स द्विपितृको द्व्या मुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च। यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं सम्प्रयतते तदा तदु त्पन्नः क्षेत्रिण एव। पुत्रो भवति न वीजिनः स च नियमेन वीजिनो रिक्थहारी पिण्डदोपीति॥ यथोक्तं मनुना॥

क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एव चेति। क्रियाभ्युपगमादिति अत्रोत्पन्न मपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत्स्वेवं क्षेत्रस्वामिना वीजिने वीजवपनार्थं दीयते तस्मिन् क्षेत्र उत्पन्नस्या पत्यस्य वीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः। तथा। फलं त्वनभिसन्धाय क्षेत्रिणां वीजिनां तथा। प्रत्यक्षं क्षेत्रिणा मर्थो वीजाद्योनिर्बलीयसीति। फलं त्वनभिसन्धायेति अत्रोत्पन्न मपत्यभावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यद पत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव। यतो वीजाद्योनिर्बलीयसी गवाश्वादिषु तथादर्शनात्। अत्रापि नियोगो वाग्दत्ताविषय एव। इतरस्य नियोगस्य मनुना निषिद्धत्वात्। देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया। प्रजेप्सिताधिगन्तव्या सन्ता

गर्भपरिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तोवाग्यतोनिशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चनेत्येव नियोगमुपन्यस्य मनुः स्वयमेव निषेधति ॥

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ एवं द्विजैर्हि विद्वद्भिः पशुधर्म्मोविगर्हितः । मनुष्याणामपि प्रोक्तोवेणौ राज्यं प्रशासति ॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः ॥ ततः प्रभृतियोमोहात्प्रमीतपतिकां स्त्रियं । नियोजयत्यपत्यार्थे गर्हन्ते तंहि साधवइति । नच विहितप्रतिषिद्धत्वाद्विकल्पइति मन्तव्यम् । नियोक्तॄणां निन्दाश्रवणात् । स्त्रीधर्म्मेषु व्यभिचारस्य बहुदोषश्रवणात् । संयमस्य प्रशस्तत्वाच्च । यथाह मनुरेव ॥

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य त्विति जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य ॥

आसीतामरणात् क्षांता नियता ब्रह्मचारिणी । योधर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणां । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।

स्वर्गं गच्छन्त्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्य लोभाद्या तु स्त्री भर्त्तारमिति वर्त्तते। सेह निन्दामवाप्नोति परलोकाच्च हीयतइति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति। तस्माद्विहितप्रतिषिद्धत्वाद्विकल्पइति न युक्तम्। एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्मोनियोगइत्यत आह ॥

यस्याम्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजोविन्देत देवरः ॥ यथा विध्यधिगम्यैनां शुक्ल वस्त्रां शुचिव्रताम्। मिथोभजेताप्रसवात्सकृत्सकृदृतावृताविति। यस्मै वाग्दत्ता कन्या सप्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव गम्यते। तस्मिन् प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरोविन्देत परिणयेत्। यथा विधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यक्तवाङ्नियमादिना। शुक्ल वस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथोरहस्यागर्भग्रहणात्प्रभृत्येकैकं वारं गच्छेत्। अयञ्च विवाहोवाचनिकोघृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्य्यात्वमापादयत्यतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिनएव भवति न देवरस्य संविदा त्वभयोरपि समानासमानजातीयानां पुत्राणां विभागकॢप्तिरुक्ता अधुना मुख्यगौणपुत्राणान्दायग्रहणव्यवस्थान्दर्शयिष्यंस्तेषां स्वरूपन्तावदाह ॥ १३० ॥

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १३१ ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः । कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १३२ ॥ अक्षतायां क्षतायाम्वा जातः पौनर्भवस्तथा । दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १३३ ॥ क्रीतश्च ताभ्याम्विक्रीतः कृत्रिमः स्यात्स्वयं कृतः । दत्तात्मातु स्वयन्दत्तो गर्भे विन्नः सहोढजः ॥ १३४ ॥ उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः ॥ ० ॥

उरसो जातः औरसः स च धर्म्मपत्नीजः सवर्णा धर्म्मविवाहोढा धर्मपत्नी तस्यां जातः औरसः पुत्रो मुख्यः तत्समः पुत्रिकासुतः तत्सम औरससमः । पुत्रिकायाः सुतः पुत्रिकासुतः । अत एव औरससमः ॥

यथाह वशिष्ठः । अभ्रातृकां प्रदास्यामि तुभ्यङ्कन्यामलङ्कृतां । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदितीति । अथ वा पुत्रिकैव सुतः पुत्रिकासुतः सोप्यौरससम एव पितृवयवाना मल्पत्वान्मातृवयवानां बाहुल्याच्च ॥

यथाह वशिष्ठः द्वितीयः पुत्रिकैवेति । द्वितीयः पुत्रः कन्यैवेत्यर्थः । द्व्यामुष्यायणस्तु जनकस्यौरसादपकृष्टोऽन्यक्षेत्रोत्पन्न

त्वात्। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। इतरेण सपिण्डेन देवरेण वोत्पन्नः पुत्रः क्षेत्रजः। गूढजः पुत्रोभर्तृगृहे प्रच्छन्नउत्पन्नो हीनाधिकजातीयपुरुषजत्वपरिहारेण पुरुषविशेषत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यम्। कानीनस्तु कन्यकायामुत्पन्नः पूर्व्ववत्सवर्णात्स मातामहस्य पुत्रः यद्यनूढा सा भवेत्तथा पितृगृहएव संस्थिता। अथोढा तदा वोढुरेव पुत्रः॥

तथाह मनुः। पितृवेश्मनि कन्या तु यम्पुत्रं जनयेद्रहः। तङ्कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवइति पौनर्भवस्तु पुत्रोऽक्षतायां क्षतायां वा पुनर्भ्वां सवर्णादुत्पन्नः। मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां सवर्णाय यस्मै दीयते स तस्य दत्तकः पुत्रः॥

यथाह मनुः। माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं सज्ञेयोदत्त्रिमः सुतइति। आपद्ग्रहणादनापदि न देयोदातुरयम्प्रतिषेधस्तथा एकः पुत्रोन देयः न त्वेवैकम्पुत्रन्दद्यात्प्रतिगृह्णीयाद्वेति वशिष्ठस्मरणात्। तथानेकपुत्रसद्भावेऽपि ज्येष्ठोन देयः। ज्येष्ठेन जातमात्रेण पुत्री भवति मानवइति तस्यैव पुत्रकार्य्यकरणे मुख्यत्वात्। पुत्रप्रतिग्रहप्रकारस्तु पुत्रं प्रतिग्रहीष्यन् बंधूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टएव प्रतिगृह्णीयादिति वशिष्ठेनोक्तः अदूरबान्धवमित्यंतदेशभाषा

विप्रकृष्टस्य प्रतिषेधः एवं क्रीतस्वयन्दत्तकृत्रिमेष्वपि योज्यं समानन्यायत्वात्। क्रीतस्तु पुत्रस्ताभ्यां मातापितृभ्यां मात्रा पित्रा वा विक्रीतः पूर्व्ववत्तथैकं पुत्रं ज्येष्ठञ्च वर्ज्जयित्वा आपदि सवर्णइत्येव॥

यत्तु मनुनोक्तम्। क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्य्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपिवेति। तद्गुणैः सदृशोवेति व्याख्येयं न जात्या सजातीयेष्वयम्प्रोक्त इत्यषु इत्युपसंहारात्। कृत्रिमः स्यात्स्वयं कृतः कृत्रिमस्तु पुत्रः स्वयम्पुत्रार्थिना धनक्षेत्रप्रदर्शनादिलोभेनैव पुत्रीकृतो मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात्। दत्तात्मातु पुत्रो मातापितृविहीनस्ताभ्यां मुक्तोवा तवाहं पुत्रोभवामीति स्वयं दत्त उपनतः सहोढजस्तु गर्भे स्थितोगर्भिण्याम्परिणीतायां यः परिणीतः स सहोढजः पुत्रः। अपविद्धोमातापितृभ्या मुत्सृष्टोयो गृह्यते स गृहीतुः पुत्रः सर्व्वत्र सवर्णइत्येव। एवं मुख्यामुख्यान्पुत्राननुक्रम्यैतेषान्दायग्रहणे क्रममाह॥ १३४॥

## पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः।

एतेषां पूर्व्वोक्तानां पुत्राणां द्वादशानां पूर्व्वस्य पूर्व्वस्या भावउत्तरउत्तरः पिण्डदः श्राद्धदोंऽशहरोधनहरोवेदि

तव्यः। औरसपौत्रिकेयसमवाये औरसस्यैव धनग्रहणे प्राप्ते मनुरपवादमाह॥

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रिया इति। तथान्येषामपि पूर्व्वस्मिन्पूर्व्वस्मिन्सत्यप्युत्तरेषां पुत्राणाञ्चतुर्थांशभागित्वमुक्तं वशिष्ठेन। तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्भागभागी स्याद्दत्तक इति। दत्तग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थं पुत्रीकरणाविशेषात्॥

तथाच कात्यायनः। उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभाजना इति। सवर्णाः क्षेत्रजदत्तकादयः ते सत्यौरसे चतुर्थांशहराः। असवर्णाः कानीनगूढोत्पन्नसहोढपौनर्भवास्ते त्वौरसे सति न चतुर्थांश हराः किन्तु ग्रासाच्छादनभाजनाः। यदपि विष्णुवचनम्॥

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः। पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिन इति। तदप्यौरसे सति चतुर्थांश निषेधपरमेव। औरसाद्यभावे तु कानीनादीनामपि सकल पितृधनग्रहणमस्त्येव पूर्व्वाभावे परःपर इति वचनात्। यदपि मनुवचनम॥

एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति। तद्दत्तकादीनामौरसप्रति कूलत्वे निर्गुणत्वे च वेदितव्यं। तत्र क्षेत्रजस्य विशेषोदर्शितस्ते

नैव। षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। औरसो विभजन्दायम्पित्र्यम्पञ्चममेव वेति प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठमंशमेकतरसद्भावे पञ्चममिति विवेक्तव्यम्। यदपि मनुना पुत्राणां षड्वर्गद्वयमुपन्यस्य पूर्व्वषट्कस्य दायादबान्धवत्वमुक्तं उत्तरषट्कस्यादायादबान्धवत्वमुक्तम्॥

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट्। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाइति। तदपि स्वपितृसपिण्डसमानोदकानां सन्निहितरिक्थहरान्तराभावे पूर्व्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तु तन्नास्ति बान्धवत्वम्पुनः समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्य्यकरत्वं वर्गद्वयस्यापि सममेवेति व्याख्येयं॥

गोत्ररिक्थे जनयितुर्नभजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेत्यत्र दत्रिमग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वात्। पितृधनहारित्वन्तु पूर्व्वस्य पूर्व्वस्याभावे सर्व्वेषामविशिष्टम्। न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरित्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्व्वेषां रिक्थहारित्वप्रतिपादनपरत्वात्। औरसस्य तु एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरित्यनेनैव ऋक्थभाक्त्वोक्तत्वात्। दायादशब्दस्य दायादानपि दापयेदित्यादौ पुत्रव्यतिरिक्तऋक्थभाग्विषयत्वेन प्रसिद्धत्वाच्च। वाशिष्ठादिषु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन

पाठोगुणवद्गुणवद्विषयोवेदितव्यः। गौतमीये तु पौत्रिकेयस्य द्वमलेन पाठोविजातीयविषयस्तस्मात्त्वितमेतत्पूर्व्वपूर्व्वाभावे परः परोंऽशभागितिं॥

यत्तुभ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्व्वास्ते नैव पुत्रेण पुत्रिणोमनुरब्रवीत्। इति तदपि भ्रातृपुत्रस्य पुत्री करणसम्भवेऽन्येषां पुत्रीकरणनिषेधार्थं। न पुनः पुत्रत्वप्रति पादनाय तत्सुतोगोत्रजोबन्धुरित्यनेन विरोधात्। इदानी मुक्तोपसंहारव्याजेन तत्रैव नियममाह॥०॥

सजातीयेष्वयम्प्रोक्तस्तनयेषु मया विधिः॥१३५॥

समानजातीयेष्वेव पुत्रेष्वयं पूर्व्वाभावे परःपरइत्युक्तोविधिर्न्न भिन्नजातीयेषु। तत्र च कानीनगूढोत्पन्नसहोढपौनर्भवानां सवर्णलञ्छनकद्वारेण न स्वरूपेण तेषां वर्णजातिलक्षणाभाव स्योक्तत्वात्। तथानुलोमजानां मूर्द्धावसिक्तादीनामौरसेष्वन्त र्भावात्तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं वोद्धव्यम्। शूद्रा पुत्रस्त्वौरसोपि कृत्स्नभागमन्याभावेऽपि न लभते॥

यथाहमनुः। यद्यपि स्यात्तु सत्पुत्रोयद्यपुत्रोऽपि वा भवेत्। नाधिकन्दशमाद्द्याच्छूद्रापुत्राय धर्मतइति। यदि सत्पुत्रो विद्यमानद्विजातिपुत्रोयद्यपुत्रोऽविद्यमानद्विजातिपुत्रोवा स्या त्तस्मिन्मृते क्षेत्रजादिर्न्वान्योऽसपिण्डः शूद्रापुत्राय तद्धना

द्वयमंशाद्धिकञ्च दद्यादित्यस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सकलधनग्रहणं गम्यते । अधुना शूद्रधनं विभागे विशेषमाह ॥१३५॥

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरोभवेत् ।
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिकं ॥ १३६ ॥
अभ्रातृकोहरेत्सर्व्वं दुहितॄणां सुतादृते ॥

शूद्रेण दास्यां समुत्पन्नः पुत्रः कामतः पितुरिच्छया भागं लभते पितुरूर्द्धन्तु यदि परिणीतापुत्राः सन्ति तदा ते भ्रातरस्तं दासीपुत्रमर्द्धभागिकं कुर्य्युः स्वभागादर्द्धं दद्यु रित्यर्थः । अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नन्धनन्दासी पुत्रोगृह्णीयात् । यदि परिणीता दुहितरस्तत्पुत्रावा न सन्ति तत्सद्भावे त्वर्द्धभागिकएव दासीपुत्रः । अत्र च शूद्रग्रहणात् द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाप्यंशं न लभते नाप्यर्द्धं दूरतएव कृत्स्नम् किन्त्वनुकूलश्चेज्जीवनमात्रं लभते । मुख्य गौणसुतादायं गृह्णन्तीति निरूपितम् । तेषामभावे सर्व्वेषा न्दायादक्रमउच्यते ॥ ० ॥

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥ १३७॥
तत्सुतागोत्रजाबन्धुः शिष्यः सब्रह्मचारिणः ॥ एषा

मभावे पूर्व्वस्य धनभागुत्तरोत्तरः ॥ १३८ ॥
स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयम्विधिः ॥ ० ॥

पूर्व्वोक्तादाद्यपुत्रायस्य न सन्त्यसावपुत्रस्तस्य स्वर्य्यातस्य परलोकं गतस्य धनभाग्धनग्राही एषाम्पत्न्यादीनामनुक्रान्तानां मध्यात्पूर्व्वस्यापूर्व्वस्याभावउत्तरोत्तरोधनभागिति सम्बन्धः सर्व्वेषु मूर्द्धावसिक्तादिष्वनुलोमजेषु वर्णेषु च ब्राह्मणादिष्वयन्दायग्रहणेक्रमोवेदितव्यः । तत्र प्रथमम्पत्नी धनभाक् । पत्नी विवाहसंस्कृता पत्युर्नोयज्ञसंयोगे इतिस्मरणात् । एकवचनञ्च जात्यभिप्रायेणातस्य बह्व्यश्चेत्सजातीया विजातीयाश्च यथांशं विभज्य धनं गृह्णन्ति वृद्धमनुरपि पत्न्याः समग्रधनसम्बन्धम्वक्ति । अपुत्रा शयनभर्त्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत चेति ॥

वृद्धविष्णुरपि । अपुत्रधनम्पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामीति ॥

कात्यायनोऽपि । पत्नी भर्त्तुर्द्धनहरीया स्यादव्यभिचारिणी । तदभावे तु दुहिता यद्यनूढा भवेत्तदेति । तथा अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राश्चकीर्त्तिताइति ॥

वृहस्पतिरपि । कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु । असुतस्य प्रमीतस्य पत्नी तद्भागहारिणीति । एतद्दिद्धानीव

वाक्यानि लक्ष्यन्ते । यथा । भ्रातॄणामप्रजाः प्रेयात्कश्चिद्वै प्रव्रजेत वा । विभजेरन् धनन्तस्य शेषास्ते स्त्रीधनं विना । भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्त्तुश्चेदाछिन्द्युरितरासुलिति । पत्नीसद्भावेऽपि भ्रातॄणान्धनग्रहणं पत्नीनाञ्च भरणमात्रं नारदेनोक्तम् ॥

मनुना तु । पिता हरेदपुत्रस्य रिक्थं भ्रातर एव चेति । अपुत्रस्य धनम्पितुर्भ्रातुर्वेति दर्शितम् । तथा अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति मातुःपितामह्याश्च धनसम्बन्धो दर्शितः ।

शङ्खेनापि । स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति भ्रातॄणाम्पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसम्बन्धो दर्शितः ॥

कात्यायनेनापि । विभक्ते संस्थिते द्रव्यम्पुत्राभावे पिता हरेत् । भ्राता वा जननी वाथ माता वा तत्पितुः क्रमादित्येवमादीनां विरुद्धार्थानां वाक्यानां धारेश्वरेण व्यवस्था दर्शिता । पत्नी दुहितरश्चेत्यादित्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम् । सा च यदि नियोगार्थिनी भवति । कुत एतन्नियोगसव्यपेक्षायाः पत्न्या धनग्रहणं न स्वतन्त्राया इति । पिता हरेदपुत्रस्येत्यादिवचनात्तत्र व्यवस्थाकारणं वक्तव्यम् । नान्यद्व्यवस्थाकारणमस्तीति । गौतमवचनाच्च । पिण्डगोत्रर्षिसम्बन्धा रिक्थम्भजेरन् स्त्री वानपत्यस्य

वीजम्वा लिप्सेतेति। अस्यार्थः। पिण्डगोत्रर्षिसम्बन्धा अनपत्यस्य ऋक्थम्भजेरन् स्त्रीवा ऋक्थम्भजेत् यदि वीजं लिप्सेतइति॥

मनुरपि। धनं योविभृयाद्भ्रातुर्म्मृतस्य स्त्रियमेव वा। सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनमित्यनेनैतद्दर्शयति विभक्तधनेऽपि भ्रातर्य्युपरते अपत्यद्वारेणैव पत्न्याधनसम्बन्धो नान्यथेति। तथा अविभक्तधनेऽपि॥

कनीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्म्मोव्यवस्थितइति॥

तथा वशिष्ठोऽपि। रिक्थलोभान्नास्ति नियोगइति। रिक्थलोभान्नियोगप्रतिषेधान्नियोगद्वारकएव पत्न्याधनसम्बन्धो नान्यथेति दर्शयति। नियोगाभावे तु पत्न्याभरणमात्रमेव नारदवचनात्। भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षया दिति। योगीश्वरेणापि किञ्च वक्ष्यते॥

अपुत्रायोषितश्चैषाम्भर्त्तव्याः साधुवृत्तयः। निर्व्वास्याव्यभिचारिण्यः प्रतिकूलास्तथैवचेति। अपिच। द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां यज्ञेऽनधिकारात् धनग्रहणमयुक्तं। तथा च केनापि स्मृतम्॥

यज्ञार्थं द्रव्यमुत्पन्नन्तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्व्वे ग्रासाच्छादनभाजनाः। यज्ञार्थं विहितं वित्तन्तस्मात्तद्विनियोजयेत्। स्थानेषु धर्म्मयुक्तेषु न स्त्रीमूर्खविधर्म्मिष्विति तदनुपपन्नं। पत्नी दुहितरइत्यत्र नियोगस्याप्रतीतेः अप्रस्तुतत्वाच्च।

अपिचेदमत्रवक्तव्यं। पत्न्याधनग्रहणे नियोगोवा निमित्तन्त्वुत्पन्नमपत्यम्वा। तत्र नियोगस्यैव निमित्तत्वेऽनुत्पादितपुत्रायाअपि धनसम्बन्धः प्राप्नोत्युत्पन्नस्य च पुत्रस्य धनसम्बन्धोन प्राप्नोति। अथ तदपत्यस्यैव निमित्तत्वं तथा सति पुत्रस्यैव धनसम्बन्धात् पत्नीतिनारम्भव्यम्। अथ स्त्रीणां पतिद्वारकोधनसम्बन्धः पुत्रद्वारकोवा नान्यथेति मतम्। तदप्यसत्॥

अध्यग्न्यध्यावाहनिकन्दत्तञ्च प्रीतिकर्म्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमित्यादि विरोधात्। किञ्च सर्व्वपुत्राभावे पत्नीदुहितरइत्यारम्भम्। तत्र युक्तायाधनसम्बन्धवदता क्षेत्रजस्यैव धनसम्बन्धउक्तोभवति। सच प्रागेवाभिहितइत्यपुत्रप्रकरणे पत्नीति नारम्भव्यम्॥

अथ पिण्डगोत्रर्षिसम्बन्धारिक्थम्भजेरन् स्त्रीवानपत्यस्य बीजम्वा लिप्सेतेति गौतमवचनान्नियुक्ताया धनसम्बन्धइति तदप्यसत्। नहि यदि वीजं लिप्सेत तदानपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते किन्त्वनपत्यस्य धनं पिण्डगोत्रर्षिसम्बन्धाभजेरन् स्त्री च सा स्त्री वीजम्वा लिप्सेत संयता वा भवेदिति तस्याधर्म्मान्तरोपदेशोवाशब्दस्य पक्षान्तरवचनत्वेन यथार्थाप्रतीतेः। अपिच संयतायाएव धनग्रहणं युक्तं न नियुक्तायाः स्मृतिलोपनिन्दितायाः॥

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेतचेति संयताया धनग्रहणं युक्तम्। तथा नियोगस्य निन्दितो मनुना॥

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनमित्यादिना। यत्तु वशिष्ठवचनं। रिक्थलोभान्नास्ति नियोग इति तदविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्याधनसम्बन्धो नास्तीति स्वापत्यस्य धनसम्बन्धार्थं नियोगो न कर्त्तव्य इति व्याख्येयम्। यदपि नारदवचनम्॥

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयादिति। तदपि संसृष्टिनान्तु यो भागस्तेषामेव स इष्यत इति। संसृष्टिनाम्प्रस्तुतत्वात्स्त्रीणामनपत्यानाम्भरणमात्रप्रतिपादनपरम्। नच भ्रातॄणामप्रजाः प्रेयादित्येतस्य संसृष्टिविषयत्वे संसृष्टानान्तु यो भाग इत्यनेन पौनरुक्त्यमाशङ्कनीयम्। यतः पूर्व्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वन्तत् स्त्रीणाञ्च भरणमात्रं विधीयते। यदप्यपुत्रायोषितश्चैषामित्यादिवचनन्तत् क्लीवादिस्त्रीविषयमिति वक्ष्यते। यत्तु द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणाञ्च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तमिति। तदसत् सर्व्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः। अथ यज्ञशब्दस्य धर्म्मोपलक्षणत्वाद्दानहोमादीनामपि धर्म्मत्वात्तदर्थत्वमविरुद्धमिति मतम्। एवन्तर्ह्यर्थकामयोर्द्धनसाध्ययोरसिद्धिरेव

स्यात्। तथाच स्मृति धर्म्ममर्थञ्च कामञ्च यथाशक्ति न हापयेत्।
तथा न पूर्व्वाह्णमध्यंदिनापराह्णानफलान् कुर्य्याद्यथाशक्ति
धर्म्मार्थकामेभ्यः तथा न तथैतानि शक्यन्ते संनियन्तुमसेवये
दित्यादियाज्ञवल्क्यगौतममनुवचनविरोधः। अपिच। धनस्य
यज्ञार्थत्वे हिरण्यं धार्य्यमिति हिरण्यधारणस्य क्रत्वर्थत्वा
निराकरणेन पुरुषार्थत्वमुक्तन्तदयुक्तं स्यात्। किञ्च यज्ञ
शब्दस्य धर्म्मोपलक्षणत्वे स्त्रीणामपि पूर्त्तधर्म्माधिकाराद्धन
ग्रहणं युक्ततरं। यत्तु पारतन्त्र्यवचनं न स्त्री स्वातन्त्र्यमर्हती
त्यादि। तदस्तु पारतन्त्र्यं धनस्वीकारे तु कोविरोधः। कथं तर्हि
यज्ञार्थं धनमुत्पन्नमित्यादिवचनम्। उच्यते। यज्ञार्थमेवा
र्जितं यद्धनं तद्यज्ञ एव विनियोक्तव्यम्। पुत्रादिभिरपीत्येवं
परन्तत्। यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेदिति
दोषश्रवणस्य पुत्रादिष्वविशेषत्वात्॥

यदपि कात्यायनेनोक्तम्। अदायिकं राजगामि योषिद्भृत्यौ
र्द्ध्वदेहिकम्। अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेदिति।
अदायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञोभवति।
योषिद्भृत्यौर्द्ध्वदेहिकं अपास्य तत्स्त्रीणामन्नाच्छादनोपयुक्त
मौर्द्ध्वदेहिकं। धनिनः श्राद्धाद्युपयुक्तञ्चापास्य परिहृत्य राज
गामि भवतीति सम्बन्धः। अस्यापवादः। श्रोत्रियद्रव्यं तु योषि
द्भृत्यौर्द्ध्वदेहिकमपास्य श्रोत्रियायोपपादयेदित्येतदप्यवरुद्ध
स्त्रीविषयं योषिद्ग्रहणात्। नारदवचनञ्च॥

अन्यत्र ब्राह्मणात्किन्तु राजा धर्म्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतइत्यवरुद्धस्त्रीविषयमेव। स्त्रीशब्दग्रहणात्। इह तु पत्नीशब्दात् ऊढायाः संयताया धनग्रहणमविरुद्धं। तस्मादविभक्तासंसृष्टिन्यपुत्रे स्वर्य्याते पत्नी धनमग्रयमं गृह्णातीत्ययमर्थः सिद्धो भवतीति। विभागस्योक्त त्वात्संसृष्टिनां वक्ष्यमाणत्वात्। एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तन्निरस्तम्वेदितव्यम्। तथाश्चौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्। यदिकुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः। तथा। पितुरूर्द्धं विभजतां माताप्यंशं समं हरेदिति च। तथा सत्यपुत्रस्य स्वर्य्यातस्य धनम्पत्नी भरणादतिरिक्तन्न लभतइति व्यामोहमात्रं। अथ पत्न्यः कार्य्याः समांशिकाइत्यत्र माताप्यंशं समं हरेदित्यत्र च जीवनोपयुक्तमेव स्त्रीधनं हरतीति तदसत्। अंशशब्दस्य समशब्दस्य चानर्थक्यप्रसङ्गात्। स्यान्मतं। बहुधने जीवनोपयुक्तं धनं गृह्णात्यल्पे तु पुत्रांशसममंशं गृह्णाति। तच्च न। विधिवैषम्यप्रसङ्गात्। तथाहि पत्न्यः कार्य्याः समांशिकाः माताप्यंशं समं हरेदिति बहुधने जीवनमात्रोपयुक्तं। वाक्यान्तरमपेक्ष्य प्रतिपादयत्यल्पधने तु पुत्रांशसममंशं प्रतिपादयतीति। यथा चातुर्मास्येषु द्वयोः प्रणयन्तीत्यत्र पूर्व्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन वैश्वदेवउत्तरवेदिमुपकिरन्ति न शुनासीरीयइत्युत्तरवेदिप्रतिषेधे दर्शिते राद्धा

सौकदेशेविना न सौमिकप्रणयनमिति देशप्राप्तायामुत्तरवेद्याः
प्रथमोत्तमयोः पर्व्वणोरयम्प्रतिषेधः । किन्तु उपावपन्तीति
प्राकरणिकेन वचनेन प्राप्तायामुत्तरवेद्याः प्रतिषेधोऽयं इत्य
भिहिते पुनः पूर्व्वपक्षिणोपावपन्तीति प्रथमोत्तमयोः पर्वणोः
प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिमापयति मध्यमयोस्तु
निरपेक्षमेव नित्यवदुत्तरवेदिम्प्रतिपादयतीति विधिवैषम्य
मुद्भावितम्। राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्तमयोः पर्व
णोरुत्तरवेदिप्रतिषेधानित्यानुवादो द्वयोः प्रणयन्तीत्याद्यर्थ
वादपर्य्यालोचनयोपावपन्तीति मध्यमयोरेव वरुणप्रघास
साकमेधपर्व्वणोरुत्तरवेदिम्विधत्त इति । दर्शितम् । यदपि
मतम्। पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति मनुस्मरणात्।
तथा स्वर्य्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यन्तदभावे पितरौ
हरेयातां ज्येष्ठा वा पत्नीति शङ्खस्मरणाच्चापुत्रधनं भ्रातृगामि
इति प्राप्ते भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयादित्या
दिवचनाच्च भरणोपयुक्तम्पत्नी लभत इत्यपि स्थितम् । एवं
स्थिते बहुधनेऽपुत्रे स्वर्य्याते भरणोपयुक्तम्पत्नी गृह्णाति शेषञ्च
भ्रातरो यदा तु पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति ततो न्यूनं
वा तदा किम्पत्न्येव गृह्णात्युत भ्रातरो पीति विरोधे पूर्व्वबली
यस्त्वज्ञापनार्थम्पत्नीदुहितर इत्यारम्भमिति तदप्यत्र भगवा
नाचार्य्येण मृष्यति। यतः पिता हरेदपुत्रस्य रिक्थं भ्रातर
एव वेति विकल्पस्मरणान्नेदं क्रमपरम्वचनमपि तु धनग्रहणे

ऽधिकारप्रदर्शनमात्रपरम्। तत्रायत्यपि पत्न्यादिगणे घटत इति व्याचचक्षे। शङ्खवचनमपि संसृष्टभ्रातृविषयमिति। अपि चाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावगम्यते। धनभागुत्तरोत्तर इत्यस्य च पत्नीदुहितर इति विषयद्वये वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्पित्रादिषु तु धनमात्रविषयत्वमिति पूर्वोक्तविधिवैषम्यन्तदवस्थमेवेति यत्किञ्चिदेतत्॥

यत्तु हारीतवचनम्। विधवा यौवनस्था चेन्नारी भवति कर्कशा। आयुषः चपणार्थन्तु दातव्यं जीवनं तदेति। तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरं। अस्मादेव वचनादशङ्कितव्यभिचारायाः सकलधनग्रहणङ्गम्यते। एतदेवाभिप्रेत्योक्तं शङ्खेन॥

ज्येष्ठा वा पत्नीति ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा सा सकलन्धनं गृहीत्वान्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम्। तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितं। तदभावे दुहितरः। दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानाञ्च समविषमांशप्राप्त्यर्थं॥

तथाच कात्यायनः। पत्नी भर्तुर्द्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति॥

बृहस्पतिरपि। भर्तुर्द्धनहरी पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणां॥ तस्मात्पितृधनं त्वन्यः

कथं गृह्णाति मातवदिति । तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति विशेष स्मरणात् । तथा प्रतिष्ठिताऽप्रतिष्ठितासमवाये प्रतिष्ठितैव तदभावेऽप्रतिष्ठिता । स्त्रीधन दुहितॄणां अप्रत्तानामप्रतिष्ठितानां चेति गौतमवचनस्य पितृधनेऽपि समानत्वात् नचैतत्पुत्रिकाविषयमिति मन्तव्यम् । तत्समः पुत्रिका सुतइति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात् । पत्नीदुहितृशब्दाद्दुहित्रभावे दौहित्रोधनभाक्॥

यथाह विष्णुः । अपुत्रपौत्रसन्ताने दौहित्राधनमाप्नुयुः । पूर्व्वेषान्तु स्वधाकारे पौत्रा दौहित्रिकामताइति ॥

मनुरपि। अकृता वा कृता वापि यं विन्देत्सदृशात्सुतं। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति। तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् । तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमोन प्रतीयते । तथापि विग्रहवाक्ये मातृशब्दस्य पूर्व्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्व्वश्रवणात्पाठक्रमादेवार्थक्रमावगमाद्धनसम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्। तदभावे पितेति गम्यते। किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता तु न साधारणेति प्रत्यासत्त्यतिशयादनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति वचनान्मातुरेव प्रथमन्धनग्रहणं

पुत्रं नच सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अपि तु समानो दकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यतइति मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्। पित्रभावे भ्रातरोधनभाजः॥

तथाच मनुः। पिता हरेदपुत्रस्य रिक्थं भ्रातरएववेति। यत्पुनर्द्वारेश्वरेणोक्तम्। अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायाम्पितुर्माता हरेद्धनमिति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायाम्पितुर्माता पितामही धनं हरेन्न पिता। यतः पितृगृहीतन्धनं विजातीयेष्वपि पुत्रेषु गच्छति। पितामहीगृहीतन्तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतदप्याचार्य्यो नानुमन्यते। विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात्। चतुस्त्रिद्व्येक भागानित्यादिनेति। यत्पुनरहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति मनुस्मरणम्। तन्नृपाभिप्रायं न पुत्राभिप्रायं भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुर्भिन्नोदराणां मातृविप्रकर्षात्। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति स्मरणात्। सोदराणामभावे भिन्नोदराधनभाजः। भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः। भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः। भ्रात्रभावे भ्रातृपुत्राणामधिकार वचनात्। यदात्वपुत्रे भ्रातरि स्वर्य्याते तद्भ्रातॄणामविशेषेण

धनसम्बन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणाम्पितृतोधिकारे प्राप्ते तेषां भ्रातृणाञ्च विभज्य ग्रहणे पितृतोभागकल्पनेति युक्तं। भ्रातृपुत्राणामप्यभावे गोत्रजाधनभाजः गोत्रजा. पितामहीसपिण्डाः समानोदकास्च तत्र पितामही प्रथमन्धनभाक्। मातर्य्यपि च वृत्तायाम्पितुर्माता धनं हरेदिति मात्रनन्तरम्पितामह्याधनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्य्यन्तानामवृद्धक्रमलेन मध्येनु प्रवेशाभावात्पितुर्माता धनं हरेत्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानामनन्तरम्पितामही गृह्णातीत्यविरोधः पितामह्यास्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयोधनभाजः भिन्नगोत्राणां सपिण्डानाम्बन्धुशब्देन ग्रहणात्। तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्रास्च क्रमेण धनभाजः पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवस्चेत्येवमासप्तमात्समानगोत्राणां सपिण्डानान्धनग्रहणम्वेदितव्यं॥ तेषामभावे समानोदकानान्धनसम्बन्धः। ते च सपिण्डानामुपरि सप्त वेदितव्याः। जन्मनामज्ञानावधिका वा॥

यथाह वृहन्मनुः। सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्॥ जन्मनाम्नोः स्मृतेरेके तत्परङ्गोत्रमुच्यतइति। गोत्रजाभावे बन्धवोधनभाजः बन्धवस्च त्रिविधाः। आत्मबन्धवः पितृबन्धवोमातृबन्धवस्चेति।

यथोक्तं। आत्मपितृष्वसुःपुत्रा आत्ममातृष्वसुः सुताः। आत्म मातुलपुत्राश्च विज्ञेयाश्चात्मबान्धवाः॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा इति। तत्र चान्तर ङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तद भावे मातृबन्धव इति क्रमो वेदितव्यः। बन्धूनामभावे आचार्य्य स्तदभावे शिष्यः पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यः। आचार्य्याभावेऽन्तेवासीत्यापस्तम्बस्मरणात्। शिष्या भावे सब्रह्मचारी धनभाक्। येन सहैकस्मादाचार्य्यादुप नयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी तदभावे ब्राह्मणद्रव्यं यः कश्चिच्छ्रोत्रियो गृह्णीयात्॥

श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थम्भजेरन्निति गौतम स्मरणात्। तदभावे ब्राह्मणमात्रम्॥

यथाह मनुः। सर्व्वेषामप्यभावे तु ब्राह्मणा रिक्थ भागिनः। त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयत इति। न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात्॥

अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति मनु वचनात्॥

नारदेनाप्युक्तम्। ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्नक श्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति। क्षत्रियादि

धनं सब्रह्मचारिपर्य्यन्तानामभावे राजाहरेन्न ब्राह्मणः ॥

यथाह मनुः। इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप इति। पुत्राः पौत्राश्च दायं गृह्णन्ति। तदभावे पत्न्यादय इत्युक्तमिदानीन्तदुभयापवादमाह ॥१३९॥

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः। क्रमे णाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः ॥१४०॥

वानप्रस्थस्य यतेर्ब्रह्मचारिणस्य क्रमेण प्रतिलोमक्रमेणा चार्य्यः सच्छिष्यो धर्म्मभ्रात्रेकतीर्थी च रिक्थस्य धनस्य भागिनः ब्रह्मचारी नैष्ठिकः। उपकुर्व्वाणस्य धनं माचादय एव गृह्णन्ति। नैष्ठिकस्य धनन्तदपवादत्वेनाचार्य्यो गृह्णाति इत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति । सच्छिष्यः पुनरध्यात्मशास्त्रश्रवण धारणतदर्थानुष्ठानक्षमः। दुर्वृत्तस्याचार्य्यादेरपि भागानर्ह त्वात्। वानप्रस्थधनन्धर्म्मभ्रात्रेकतीर्थी गृह्णाति धर्म्मभ्राता एक तीर्थैकाश्रमी धर्म्मभ्रातासौ एकतीर्थी च धर्म्मभ्रात्रेकतीर्थी। एतेषामाचार्य्यादीनामभावे पुत्रकादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति। अनन्तंशास्त्राश्रमान्तरगता इति वशिष्ठस्मरणादा श्रमान्तरगतानां रिक्थसम्बन्ध एव नास्ति कुतस्तद्विभागः। न च नैष्ठिकस्य स्वार्जितधनसम्बन्धः। विग्रहादिनिषेधात्।

अनिचयो भिक्षुरिति गौतमस्मरणाद्भिक्षोरपि न स्वार्जितधनसम्बन्धः। उच्यते। वानप्रस्थस्य तावत्॥

अह्नो मासस्य षण्णां वा तथा सम्वत्सरस्य वा। अर्थस्य निचयं कुर्य्यात्कृतमाश्वयुजे त्यजेदिति वचनात्। धनसम्बन्धोऽस्त्येव यतेरपि॥ कौपीनाच्छादनार्थं हि वासो वै बिभृयाच्च सः। योगसम्भारभेदांश्च गृह्णीयात्पादुके तथेत्यादिवचनाद्वस्त्रपुस्तकादिसम्बन्धोऽस्त्येव। नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसम्बन्धोऽस्त्येवेति तद्विभागकथनं युक्तमेव। इदानीं स्वर्यातस्यापुत्रस्य पत्न्यादयोधनभाजइत्युक्तस्यापवादमाह॥१४०॥

संसृष्टिनस्तु संसृष्टी

विभक्तं धनम्पुनर्मिश्रीकृतं संसृष्टन्तदस्यास्तीति संसृष्टी संसृष्टत्वञ्च न येन केनापि। किन्तु पित्रा भ्रात्रा पितृव्येण वा॥

यथाह बृहस्पतिः। विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तत्संसृष्ट उच्यत इति। तस्य संसृष्टिनः मृतस्यांशं विभागकाले अविज्ञातगर्भायां भार्य्यायां पश्चादुत्पन्नस्य पुत्रस्य संसृष्टी दद्यात्। पुत्राभावे संसृष्ट्येवापहरेत् गृह्णीयान्न पत्न्यादिः। संसृष्टिनः संसृष्टीत्यस्यापवादमाह॥०॥

सोदरस्य तु सोदरः। दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥ १४१ ॥

संसृष्टिनः संसृष्टीत्यनुवर्त्तते अतश्च सोदरस्य संसृष्टिनोमृतस्यांशं सोदरः संसृष्टी संसृष्टानुजातस्य सुतस्य दद्यात्तदभावे अपहरेदिति पूर्व्ववत्सम्बन्धः। एवञ्च सोदरसंसर्गे सोदरस्य सोदरासंसृष्टिनोधनं सोदरएव संसृष्टी गृह्णाति न भिन्नोदरः संसृष्ट्यपीतिपूर्वोक्तस्यापवादः। इदानीं संसृष्टिन्यपुत्रे स्वर्यातेसंसृष्टिनोभिन्नोदरस्य सोदरस्य चासंसृष्टिनः सद्भावे कस्य धनग्रहणमिति विवक्षायां। द्वयोर्व्विभज्य ग्रहणे कारणमाह ॥ १४१ ॥

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्योधनं हरेत्। असंसृष्ट्यपि वा दद्यात्संसृष्टोनान्यमातृजः ॥ १४२ ॥

अन्योदर्य्यः सापत्नोभ्राता संसृष्टी धनं हरेन्न पुनरन्योदर्य्योधनं हरेदसंसृष्टी। अनेनान्वयव्यतिरेकाभ्यामन्योदर्य्यस्य संसृष्टित्वं धनग्रहणे कारणमुक्तम्। असंसृष्टीत्येतदुत्तरेणापि सम्बध्यते अतस्त्वासंसृष्ट्यपि संसृष्टिनोधनं आददीत। कोसावित्यतआह॥

संसृष्टइति संसृष्टएकोदरसंसृष्टः सोदरइति यावत्। अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तं। संसृष्टइत्युत्तरेणापि संबध्यते तत्र संसृष्टः संसृष्टीत्यर्थः। नान्य मातृजः अत्रैवशब्दाध्याहारेण व्याख्यानं कार्य्यं संसृष्ट्यप्यन्य मातृजएव संसृष्टिनोधनं नाददीतेति। एवं चासंसृष्ट्यपि वा दद्यादित्यपिशब्दश्रवणात्। संसृष्टोनान्यमातृजएवेत्यव धारणनिषेधाच्च असंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्त्तव्यमित्युक्तं भवति। द्वयोरपि धनग्रहण कारणस्यैकैकस्य सद्भावात्। एतदेव स्पष्टीकृतं मनुना॥

विभक्ताः सह जीवन्तोविभजेरन्पुनर्य्यदीति। संसृष्टिविभागं प्रक्रम्य॥

येषां ज्येष्ठः कनिष्ठोवा हीयेतांशप्रदानतः। म्रियेतान्यतरो वापि तस्य भागोन लुप्यते॥ सोदर्य्याः विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरोये च संसृष्टा भगिन्यश्च सनाभयइति वदता येषां भ्रातॄणां संसृष्टिनां मध्ये ज्येष्ठः कनिष्ठोमध्यमोवांशप्रदान तोंशप्रदाने सार्व्वविभक्तिकस्तसिः। विभागकालइति यावत् हीयेतस्वांशाद्भ्रश्येताश्रमान्तरपरिग्रहेण ब्रह्महत्यादिना वा म्रियेत वा तस्य भागोन लुप्यते। अतः पृथगुद्धरणीयोन संसृष्टिनएव गृह्णीयुरित्यर्थः तस्योद्धृतस्य विनियोगमाह। सोदर्य्याविभजेयुस्तमिति। तमुद्धृतभागं सोदर्य्याः सहोदराः असंसृष्टाअपि समेत्य देशान्तरगताअपि समागम्य सहिता

सम्भूय समं न न्यूनाधिकभावेन येच भ्रातरोभिन्नोदराः संसृष्टास्ते च सनाभयोभगिन्यश्च विभजेयुः समं विभज्य गृह्णीयु रिति स्पष्टोर्थः। पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तन्तस्या पवादमाह॥ १४१॥

**क्लीवोथ पतितस्तज्जः पङ्गुरुन्मत्तकोजडः। अन्धो चिकित्स्यरोगाद्याभर्त्तव्याः स्युर्निरंशकाः॥ १४२॥**

क्लीवस्तृतीयाप्रकृतिः पतितोब्रह्महादिस्तज्जः पतितोत्पन्नः पङ्गुःपादविकलः उन्मत्तकः वातिकपैत्तिकश्लैष्मिकसन्निपातिक ग्रहावेशलक्षणैरुन्मादैरभिभूतः। जडोविकलान्तःकरणोहिता हितावधारणाक्षमइति यावत्। अन्धोनेत्रेन्द्रियविकलः। अचि कित्स्यरोगः अप्रतिसमाधेययक्ष्मादिरोगग्रस्तः आद्यशब्देनाश्र मान्तरगतपितृद्वेष्युपपातकिवधिरमूकनिरिन्द्रियाणां ग्रहणं॥

यथाह वशिष्ठः। अनंशास्त्वाश्रमान्तरगता इति नारदोपि पितृद्विट् पतितः षण्डोयश्चस्यादौपपातिकः। औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतइति॥

मनुरपि। अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा। उन्मत्तजडमूकाश्च येच केचिन्निरिन्द्रियाइति। निरिन्द्रियो निर्गतमिन्द्रियं यस्माद्व्याध्यादिना स निरिन्द्रियः। एते क्लीवा

इत्येतेनंशा रिक्थभाजोन भवन्ति केवलमन्नाच्छादनदानेन पोषणीया भवेयुः। अभरणे तु पतितत्वदोषः॥

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादन मत्यन्तं पतितोह्यददद्भवेदिति मनुस्मरणात्। अत्यन्तं याव ज्जीवमित्यर्थः। एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वं न पुन र्विभक्तस्य। विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव। विभक्तेषु सुतोजातः सवर्णायां विभागभाक् इत्यस्य समानन्यायत्वात्। पतितादिषु पुलिङ्गमविवक्षितमतस्य पत्नीदुहितृमाचादीनामपि उक्तदोषदुष्टानामनंशित्वं वेदि तव्यं। क्लीवादीनामनंशित्वात्तत्पुत्राणामप्यनंशित्वे प्राप्तइद माह॥१४२॥

औरसाः क्षेत्रजास्त्वेषां निर्दोषाभागहारिणः।

एतेषां क्लीवादीनामौरसाः क्षेत्रजावा पुत्रानिर्दोषाअंश ग्रहणविरोधिक्लैव्यादिदोषरहिता भागहारिणोंशग्राहिणो भवन्ति। तत्र क्लीवस्य क्षेत्रजः पुत्रसम्भवत्यन्येषामौरसाअपि औरसक्षेत्रजयोर्ग्रहणं इतरपुत्रव्युदासार्थं। क्लीवादिदुहितॄणां विशेषमाह॥०॥

सुतास्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः॥१४४॥

एतेषां क्लीवादीनां सुतादुहितरो यावद्विवाहसंस्कृता भवन्ति तावद्भरणीयाः। चशब्दात्संस्कार्य्याश्च। क्लीवादिपत्नीनां विशेषमाह॥ १४४॥

अपुत्रायोषितश्चैषां भर्तव्याः साधुवृत्तयः।
निर्व्वास्याव्यभिचारिण्यः प्रतिकूलास्तथैव च॥१४५॥

एषां क्लीवादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्तव्याभरणीयाः। व्यभिचारिण्यस्तु निर्वास्याः प्रतिकूलास्तथैव च निर्व्वास्याभवन्ति भरणीयास्त्वव्यभिचारिण्यश्चेत्। न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्तव्यम्। विभजेरन् सुताः पित्रोरित्यत्र स्त्रीपुंधनविभागं संक्षेपेणाभिधाय पुरुषधनविभागोविस्तरेणाभिहितः। इदानीं स्त्रीधनविभागं विस्तरेणाभिधास्यंस्तत्स्वरूपं तावदाह॥ १४५॥

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतं। आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितं॥१४६॥

पित्रा मात्रा पत्या भ्रात्रा च यद्दत्तं यच्च विवाहकालेऽग्नावधिकृत्य मातुलादिभिर्द्दत्तं आधिवेदनिकं अधिवेदननिमित्त

अधिविन्नस्त्रियै दद्यादिति वक्ष्यमाणं। आद्यशब्देन क्रयक्रय
सम्विभागपरिग्रहाधिगमप्राप्तमेतत्स्त्रीधनं मन्वादिभिरुक्तं।
स्त्रीधनशब्दस्य यौगिकोन पारिभाषिकः योगसम्भवे परि
भाषायामयुक्तत्वात् यत्पुनर्मनुनोक्तम्॥

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि। भ्रातृमातृपितृ
प्राप्तं षड्विधं स्त्रीधनं स्मृतमिति स्त्रीधनस्य षड्विधत्वं तन्न्यून
सङ्ख्याव्यवच्छेदार्थं नाधिकसङ्ख्याव्यवच्छेदाय अध्यग्न्यादि
स्वरूपञ्च कात्यायनेनाभिहितम्॥

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ। तदध्यग्नि
कृतं सद्भिः स्त्रीधनं परिकीर्तितं॥ यत्पुनर्लभते नारी नीयमाना
पितुर्गृहात्। अध्यावाहनिकं नाम स्त्रीधनन्तदुदाहृतं॥ प्रीत्या
दत्तन्तु यत्किञ्चित् श्वश्वा वा श्वशुरेण वा। पादवन्दनिकं चैव
प्रीतिदत्तन्तदुच्यते॥ ऊढया कन्यया वापि पत्युः पितृगृहेऽपि
वा। भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतमिति।
किञ्च॥ १४६॥

## बन्धुदत्तं तथा शुल्कमन्वाधेयकमेवच।

बन्धुभिः कन्यायामातृबन्धुभिः पितृबन्धुभिस्च यद्दत्तं।
शुल्कं यद्गृहीत्वा कन्या दीयते। अन्वाधेयकं परिणयनादनु
पश्चादाहितं दत्तं। उक्तञ्च कात्यायनेन॥

विवाहात्परतोयच्च लब्धं भर्तृकुलात्स्त्रिया। अन्वाधेयन्तु तद्द्रव्यं लब्धं पितृकुलात्तथेति। स्त्रीधनं परिकीर्तितमिति गतेन सम्बन्धः। एवं स्त्रीधनमुक्तं तद्विभागमाह॥

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः॥ १४७॥

तत्पूर्वोक्तं स्त्रीधनमप्रजस्यनपत्यायां दुहितृदौहित्रीदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयो वक्ष्यमाणा गृह्णन्ति सामान्येन बान्धवा धनग्रहणे अधिकारिणो दर्शिताः। इदानीं विवाहभेदेनाधिकारिभेदमाह॥१४७॥

अप्रजः स्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्॥१४८॥

अप्रजसः स्त्रियाः पूर्वोक्ताया ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्यात्वं प्राप्ताया अतीताया पूर्वोक्तन्धनन्प्रथमम्भर्त्तुर्भवति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। शेषेष्वासुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि। एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्व्वमेवोक्तं।

तदभावे तत्प्रत्यासन्नानां धनग्रहणं सर्वेष्वेव विवाहेषु प्रसूता पत्यवती चेत्। दुहितॄणां तद्धनं भवति अत्र दुहितृशब्देन दुहितृदुहितरउच्यन्ते। यथाहुर्दुहितॄणां मातुर्दुहितरः शेष मित्यत्रोक्तत्वात्। अतश्च मातृधनं मातरि मृतायां प्रथमं दुहितरोगृह्णन्ति। तत्र चोढानूढासमवायेऽनूढा गृह्णाति। तदभावे परिणीतातत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रति ष्ठिता गृह्णाति तदभावे प्रतिष्ठिता॥

यथाह गौतमः। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठिता नाञ्चेति। तत्र च शब्दात्प्रतिष्ठितानाञ्च अप्रतिष्ठिता अनपत्या निर्द्धना वा। एतच्च शुल्कव्यतिरेकेण। शुल्कन्तु सोदर्य्यानामेव भगिनीशुल्कं सोदर्य्याणामूर्द्धं मातुरिति गौतमवचनात्। सर्व्वासां दुहितॄणामभावे दुहितृदुहितरोगृह्णन्ति। दुहितॄणां प्रसूताचेदित्यस्माद्वचनात्। तासां भिन्नमातृकाणां विषमाणां समवाये मातृद्वारेण भागकल्पना॥

प्रतिमातृतोवा स्ववर्गेण भागविशेषइति गौतमस्मरणात्। दुहितृदौहित्रीणां समवाये दौहित्रीणां किञ्चिदेव दातव्यम्॥ यथाह मनुः। यास्तासांस्युर्दुहितरस्तासामपि यथार्हतः। मातामह्याधनात्किञ्चित्प्रदेयं प्रीतिपूर्व्वकमिति दौहितॄणामप्य भावे दौहित्राधनहारिणः॥

यथाह नारदः। मातुर्दुहितरोभावे दुहितॄणां तदन्वय इति तच्छब्देन संनिहितदुहितृपरामर्शात्। दौहित्राणाम

भावे पुत्रा गृह्णन्ति। ताभ्यांस्तते अन्वयइत्युक्तत्वात्। मनुरपि दुहितॄणां पुत्राणाञ्च मातृधनसम्बन्धन्दर्शयति ॥

जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयइति। मातृकं रिक्थं सर्व्वे सहोदराः समभ्भजेरन् सनाभयोभगिन्यश्च समं भजेरन् इति सम्बन्धः न पुनः सहोदराभगिन्यश्च सम्भूय भजेरन् इति। इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेर्विभागकर्तृत्वान्वये नापि सम्बन्धोपपत्तेर्यथा देवदत्तः कृषिं कुर्य्याद्यज्ञदत्तश्चेति। समग्रहणमुद्धारविभागनिवृत्त्यर्थम्। सोदरग्रहणम्भिन्नोदरनिवृत्त्यर्थम्। अनपत्यहीनजातिस्त्रीधनन्तु भिन्नोदराप्युत्तमजातीय सपत्नीदुहिता गृह्णाति। तदभावे तदपत्यं। तथाच मनुः॥

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वाभवेदिति। ब्राह्मणीग्रहणमुत्तमजात्युपलक्षणम्। अतश्चानपत्यवैश्याधनं क्षत्रियाकन्या गृह्णाति। पुत्राणामभावे पौत्रापितामहीधनहारिणः। ऋणभाजऋणं प्रतिकुर्य्युरिति गौतमस्मरणात्। पुत्रपौत्रैर्ऋणं देयमिति पौत्राणामपि पितामह्यार्णपाकरणेऽधिकारात्। पौत्राणामप्यभावे पूर्व्वोक्ताभर्त्रादयोबान्धवाधनहारिणः स्त्रीधनप्रसङ्गेन वाग्दत्ताविषयं किञ्चिदाह ॥ १४८ ॥

दत्वा कन्यां हरन् दण्ड्योव्ययं दद्याच्च सोदयं ।

कन्यां वाचा दत्वापहरन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः। एतच्चापहारकारणाभावे सति तु कारणे दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेदित्यपहाराभ्यनुज्ञानाच्च दण्ड्यः। यच्च वाग्दाननिमित्तं वरेण स्वसम्बन्धिनां कन्यासम्बन्धिनां वोपचारार्थं धनं व्ययीकृतम्। तत्सर्व्वं सोदयं सवृद्धिकं कन्यादाता वराय दद्यात्। अथ कथञ्चिद्वाग्दत्ता संस्कारात्प्राङ्म्रियेत तदा किं कर्त्तव्यमित्यत आह॥

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम्॥१४९॥

यदि वाग्दत्ता मृता तदा यत्पूर्व्वमङ्गुलीयकादिशुल्कं वरेण दत्तं तद्वर आददीत परिशोध्योभयव्ययम्। उभयोरात्मनः कन्यादातुश्च योव्ययस्तं परिशोध्य विगणय्यावशिष्टमाददीत यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा क्रमायातन्तत्सोदराभ्रातरो गृह्णीयुः॥

रिक्थं मृतायाः कन्यायाः सोदरा गृह्णीयुस्तदभावे पितुरिति बौद्धायनस्मरणात्। मृताप्रजःस्त्रीधनभर्त्तृगामीत्युक्तमिदानीं जीवन्त्याः सप्रजाया अपि स्त्रियाधनग्रहणे क्वचिद्भर्त्तुरभ्यनुज्ञानमाह॥१४८॥

दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति ॥१५०॥

दुर्भिक्षे कुटुम्बरक्षणार्थे धर्म्मकार्य्येऽवश्यकर्त्तव्ये व्याधौ च सम्प्रतिरोधके बन्दिग्रहणनिग्रहादौ द्रव्यान्तररहितः स्त्रीधनं गृह्णन् भर्ता न पुनर्दातुमर्हति । प्रकारान्तरेणापहरन् दद्यात् भर्तृव्यतिरेकेण जीवन्त्याः स्त्रियाः धनं केनापि दायादेन न गृहीतव्यम् ॥

जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः । तान् शिष्यात् चौरदण्डेन धार्म्मिकः पृथिवीपतिरिति दण्डविधानात्। तथा॥

पत्यौ जीवति यः स्त्रीभिरलङ्कारोधृतोभवेत्। न तम्भजेरन् दायादाभजमानाः पतन्ति ते इतिदोषश्रवणाच्च । आधिवेदनिकं स्त्रीधनमुक्तन्तदाह॥ १५०॥

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्। न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम्॥ १५१॥

यस्याउपरिविवाहः साधिविन्ना वा चासौ स्त्री च तस्यै अधिविन्नस्त्रियै आधिवेदनिकमधिवेदननिमित्तं धनं समं यावदधिवेदनार्थं व्ययीकृतन्तावद्दद्यात् । यस्मै भर्त्राश्वशुरेण वा

स्त्रीधनं न दत्तं दत्ते पुन: स्त्रीधने आधिवेदनिकद्रव्यस्यार्द्धं दद्यात्। अर्द्धशब्दश्च समप्रविभागवचनपरोन भवत्यतश्च यावतातत्पूर्व्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः। एवम्विभागमुक्त्वेदानीं तत्सन्देहे निर्णयहेतुमाह ॥ १५१ ॥

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतुकैः ॥ १५२ ॥

विभागस्य निह्नवेऽपलापे ज्ञातिभिः पितृबन्धुभिः साक्षिभिर्मातुलादिभिर्मातृबन्धुभिः पूर्व्वोक्तलक्षणैःर्लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयोज्ञेयः। तथा यौतुकैः पृथक्कृतैर्गृहक्षेत्रैश्च पृथक्कृष्यादिकार्य्यप्रवर्त्तनम्। पृथक् पञ्चमहायज्ञादिधर्म्मानुष्ठानञ्च। नारदेन विभागलिङ्गमुक्तम्॥

विभागधर्म्मसन्देहे दायादानामिनिर्णयः। ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्त्तनात्॥ भ्रातॄणामविभक्तानामेकोधर्म्मः प्रवर्त्तते। विभागे सति धर्म्मोपि भवेदेषां पृथक् पृथगिति। तथा पराण्यपि विभागलिङ्गानि तेनैवोक्तानि। साक्षित्वंप्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ताभ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चनेति ॥ १५२ ॥

॥ ० ॥ इति रिक्थभागप्रकरणम् ॥ ० ॥

॥ अधुना सीमाविवादनिर्णयउच्यते ॥

सीम्नोविवादे क्षेत्रस्य सामन्ताः स्थविरादयः।
गोपाः सीमाकृषाणा ये सर्व्वे च वनगोचराः॥
१५३॥ न येयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः। सेतु
वल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम्॥१५४॥

ग्रामद्वयसम्बन्धिनः क्षेत्रस्य सीम्नोविवादे तथैकग्रामान्त
र्वर्त्तिक्षेत्रमर्य्यादाविवादे च सामन्तादयः स्थलाङ्गारादिभिः
पूर्व्वकृतैः सीमालक्षणैरुपलक्षितां चिह्नितां सीमां नयेयुः
निश्चिनुयुः सीमा क्षेत्रादिमर्य्यादा सा चतुर्विधा। जनपदसीमा
ग्रामसीमाक्षेत्रसीमा गृहसीमाचेति। साच यथा सम्भवम्पञ्च
लक्षणा तदुक्तं नारदेन॥

ध्वजिनी मत्सिनीचैव नैधानी भयवर्जिता। राजशासन
नीता च सीमा पञ्चविधा स्मृतेति। ध्वजिनी वृक्षादिलक्षिता।
वृक्षादीनाम्प्रकाशकत्वेन ध्वजतुल्यत्वात्। मत्सिनी सलिलवती
मत्स्यशब्दस्य साधारजललक्षणत्वात्। नैधानी निखाततुषा
ङ्गारादिमती। तेषां निखातत्वेन निधानतुल्यत्वात्। भय
वर्जिता। अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्तिनिर्मिता राज
शासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता। एवं
भूतायां सीमाविवादः सम्भवति। यथाह कात्यायनः॥

आधिक्यं न्यूनताचांशे अस्ति नास्तित्वमेव च। अभोगभुक्तिः सीमा च षड्भूवादस्य हेतवइति। तथाहि। ममात्र पञ्चनिवर्त्तनायाभूमेरधिका भूरस्तीति केनचिदुक्ते पञ्चनिवर्त्तनैव नाधिकेत्याधिक्ये विवादः। पञ्चनिवर्त्तना मदीया भूरित्युक्तेन ततोन्यूनैवेति न्यूनतायाम्पञ्चनिवर्त्तनो ममांश इत्युक्तेऽंश एव नास्तीत्यस्ति नास्तित्वविवादः सम्भवति। मदीया भूः प्रागविद्यमानभोगैव भुज्यत इत्युक्ते न सन्तता चिरन्तन्येव मे भुक्तिरित्यभोगभुक्तौ विवादः। इयं मर्य्यादेयञ्चेति सीमाविवाद इति षट्प्रकारएव विवादः सम्भवति। षट्प्रकारेऽपि भूविवादे भुक्त्यर्थाभ्यां सीमायाः अपि निर्णीयमानत्वात्सीमानिर्णयप्रकरणे तस्यान्तर्भावः। समन्ताद्भवाः सामन्ताः। चतसृषु दिक्ष्वनन्तराग्रामादयस्तेच प्रतिसीमं व्यवस्थिताः॥

ग्रामोग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम्। गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हीति कात्यायनवचनात् ग्रामादिशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते। ग्रामः पलायतइति यथा। सामन्तग्रहणञ्च तत्संसक्ताद्युपलक्षणार्थं उक्तञ्च कात्यायनेन। संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः। संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताइति। स्थविरा वृद्धाः आदिग्रहणेन मौलोद्धृतयोर्ग्रहणं। वृद्धादिलक्षणञ्च तेनैवोक्तम्॥

निष्पाद्यमानं येद्दृष्टन्तत्कार्य्यन्तद्गुणान्वितैः। ध्वजावा यदिवा ध्वजास्तेच ध्वजाः प्रकीर्तिताः॥ ये तत्र पूर्व्वं सामन्ताः पश्चाद्देशान्तरङ्गताः। तन्मूलत्वात्तु ते मौलाऋषिभिः परिकीर्तिताः॥ उपश्रवणसम्भोगकार्य्याख्यानोपचिह्निताः। उद्धरन्ति पुनर्य्यस्मादुद्धृतास्ते ततः स्मृताइति। गोपागोचारकाः। सीमाकृषाणाः सीमासन्निहितक्षेत्रकर्षकाः। सर्व्वे च वनगोचरावनचारिणोव्याधादयस्ते च मनुनोक्ताः॥

व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखातकान्। व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरानिति। स्थलमुन्नतो भूप्रदेशः। अङ्गारोऽग्नेरुच्छिष्टं। तुषा धान्यत्वचः। द्रुमान्यग्रोधादयः सेतुर्जलप्रवाहबन्धः चैत्यम्पाषाणादिबन्धः आद्यशब्देन वेणुवालुकादीनां ग्रहणम्। एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि। तथाच मनुः॥

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्। शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान्। गुल्मान्वेणूंश्च विविधाञ्छमीवल्लीस्थलानि च॥ शरान् कुब्जकगुल्मांश्च तथासीमा न नश्यति। तडागानुदपानानि वाप्यः प्रस्रवणानि च। सीमासन्धिषु कार्य्याणि देवतायतनानि चेति प्रकाशरूपाणि॥

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत्। सीमाज्ञाने नृणाम्वीक्ष्य नित्यं लोके विपर्ययम्॥ अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः। करीषमिष्टकाङ्गारशर्करा

वालुकास्तथा॥ यानि चैवम्प्रकाराणि कालाद्भूमिर्न भक्षयेत्। तानि सन्धिषु सीमायामप्रकाशानि कारयेत्॥ एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोरिति। प्रच्छन्नलिङ्गानि एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामन्तादिप्रदर्शितैः सीमाम्प्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा यदा पुनश्चिह्नानि न सन्ति विद्यमानानि वा चिह्नानि सन्दिग्धानि तदा निर्णयोपायमाह॥ १५४॥

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः॥१५५॥

सामन्ताः पूर्वोक्तलक्षणाः समग्रामाश्चत्वारोऽष्टौ दशापि वै त्येवं समसङ्ख्याः प्रत्यासन्नग्रामीणाः। रक्तस्रग्विणो रक्ताम्बरधरा मूर्द्धारोपितक्षितिखण्डाः सीमानं नयेयुः प्रदर्शयेयुः। सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्यभिप्रायम्। यथाह मनुः॥

साक्षिप्रत्ययएव स्यात्सीमावादविनिर्णयइति। तत्र च साक्षिणां निर्दिष्टलं मुख्यन्तदभावे सामन्तानाम्। तदुक्तम्॥

साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः। सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधाविति। तदभावे तत्संसक्तादीनान्निर्दिष्टत्वम्। यथाह कात्यायनः॥

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्। तत्संसक्तैस्तु कर्त्तव्यउद्धारोग्राह्य संशयः॥ संसक्तसक्तदोषेतु तत्संसक्ताः प्रकीर्त्तिताः। कर्तव्यास्न प्रदुष्टास्तु राज्ञा धर्म्मं विजानतेति। सामन्ताद्यभावे मौलादयोग्राह्याः। तेषामभावे सामन्तमौलवृद्धोद्धृतादयः॥

स्थावरे षट्प्रकारेऽपि कार्य्या नाच विचारणेति कात्यायनेन क्रमविधानात्। एतेच सामन्तादयः सङ्ख्यागुणातिरेकेण सम्भवन्ति। सामन्ताः साधनं पूर्व्वं निर्दोषाः स्युर्गुणान्विताः। द्विगुणास्तूत्तरा ज्ञेयास्ततोन्ये त्रिगुणामताइति स्मरणात्। तेच साक्षिणः सामन्तादयस्च स्वैः स्वैः शपथैः श्रापिताः सन्तः सीमां नयेयुः॥

शिरोभिस्ते गृहीत्वोर्व्वीं स्त्रग्विणोरक्तवाससः। सुकृतैः श्रापिताः स्वैः स्वैर्न्नयेयुस्ते समञ्जसमिति स्मरणात्। नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य॥

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्। रक्तमाल्याम्बरधरोभूमिमादाय मूर्द्धनीति नारदेनैकस्याभ्यनुज्ञानात्। यत्तु॥

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि। गुरुत्वादस्य कार्य्यस्य क्रियैषा बहुषु स्थितेत्येकस्य निषेधः। स उभयानुमतधर्म्मविज्ञातिरिक्तविषयइत्यविरोधः। स्वत्वादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञानउपायविशेषोनारदेनोक्तः।

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु। तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनादिति। निम्नगायानद्याः अपहृतं गोपहरणे नोत्सृष्टानि स्वस्थानात्प्रच्युतानि नष्टानि वा चिह्नानि यासु मर्य्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानामप्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागइत्येवमभिधानात्प्रमाणाद्वा प्रत्यर्थिसमक्षमविप्रतिपन्नायाः स्मार्त्तकालोपलक्षितैर्भुक्तैर्व्वा निश्चिनुयुः। वृहस्पतिना चात्र विशेषो दर्शितः॥

आगमश्च प्रमाणञ्च भोगकालश्च नाम च। भूभागलक्षणञ्चैव येविदुस्तेच साक्षिणइति। एते च साक्षिसामन्तादयः अपथैः शापिताः सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः॥

यथाह मनुः। ।ग्रामेयककुलानान्तु समक्षं सीम्नि साक्षिणः। प्रष्टव्याःसीमलिङ्गानि तयोश्चैव विवादिनोरिति। ते पृष्टाः साक्ष्यादयः समस्ताऐकमत्येन सीम्नि निर्णयं ब्रूयुः। तैर्निर्णीता सीमा तत्प्रदर्शितसकललिङ्गयुक्ता साक्ष्यादिनामाङ्किता साविस्मरणार्थम्पत्रे समारोपयेत्। उक्तञ्च मनुना॥

ते पृष्टास्तु यथाब्रूयुः सामन्ताः सीम्नि निर्णयम्। निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतइति। एतेषां साक्षिसामन्तप्रभृतीनां सीमाचंक्रमणदिनादारभ्य यावत्त्रिपक्षं राजदैविकव्यसनं चेन्नोपपद्यते तदा तत्प्रदर्शनात्सीमानिर्णयः। अयञ्च राजदैविकव्यसनावधिः कात्यायनेनोक्तः॥

सीमाचंक्रमणे कोषे पादस्पर्शे तथैव च। त्रिपक्षपञ्चसप्ताहं दैवराजिकमिष्यतइति । यदात्वमीषां उक्तसाच्यवचसां त्रिपक्षाभ्यन्तरे रोगादिर्दृश्यते। अथवा प्रतिवादिनिर्दिष्टा अधिकसङ्ख्यागुणसाच्यन्तरविरुद्धवचनता तदा ते मृषाभाषितया दण्डनीयाः॥ १५५॥

## तदाह । अनृते तु पृथग्दण्ड्याराज्ञा मध्यम साहसम्।

अनृते मिथ्यावदने निमित्तभूते सति सर्व्वे सामन्ताः प्रत्येकं मध्यमसाहसेन चत्वारिंशदधिकेन पणपञ्चशतेन दण्डनीयाः। सामन्तविषयता चास्य साच्यमौलादीनां स्मृत्यन्तरे दण्डान्तर विधानादवगम्यते॥

तथा च मनुः। यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतन्दमिति॥

नारदोपि। अथ चेदनृतं ब्रूयुः सामन्ताः सीम्नि निर्णये। सर्व्वे पृथक् पृथक् दण्ड्याराज्ञा मध्यमसाहसमिति। सामन्तानां मध्यमसाहसं दण्डमभिधाय॥

शेषाश्चेदनृतं ब्रूयुर्नियुक्ताभूमिकर्म्मणि। प्रत्येकन्तु जघन्यास्ते विनेयाः पूर्व्वसाहसमिति । तत्संसक्तादिषु प्रथमं साहसमुक्तवान्। मौलादीनामपि तमेव दण्डमाह॥

मौलवृद्धादयस्त्वन्ये दण्ड्यगत्या पृथक् पृथक्। विनेयाः प्रथमेनैव साहसेनानृते स्थिताइति। आदिग्रहणेन गोपशाकुनिकव्याधवनगोचराणांग्रहणम्। यद्यपि शाकुनिकादीनां पापरतत्वाल्लिंगप्रदर्शनएवोपयोगोन साक्षात्सीमानिर्णये तथापि चिह्नदर्शनएव मृषाभाषित्वसम्भवाद्दण्डविधानमुपपद्यतएव। अनृते तु पृथग्दण्ड्याइत्येतद्दण्डविधानमज्ञानविषयम्॥

वहूनान्तु गृहीतॄनां न सर्व्वे निर्णयं यदि। कुर्य्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसमिति। ज्ञानविषये साक्ष्यादीनां कात्यायनेन दण्डान्तरविधानात्। तथा साक्षिवचनभेदेप्ययमेव दण्डस्तेनैवोक्तः॥

कीर्त्तिते यद्यपि भेदः स्याद्दण्ड्यास्तूत्तमसाहसमिति। एवमज्ञानादिनानृतवदने साक्ष्यादीन्दण्डयित्वा पुनः सीमाविचारः प्रवर्त्तयितव्यः॥

अज्ञानोक्तौ दण्डयित्वा पुनः सीमाम्विचारयेदित्युक्ता॥

त्यक्ता दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह। संमिश्राः कारयेत्सीमामेवं धर्म्मविदोविदुरिति निर्णयप्रकारस्तेनैवोक्तः॥ यदा पुनः सामन्तप्रभृतयोज्ञातारश्चिह्नानि च न सन्ति तदा कथं निर्णयइत्यतआह॥०॥

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता ॥१५६॥

ग्रामाणां सामन्तादीनां लिङ्गादीनामपि चिह्नादीनामभावे राजैव सीम्नः प्रवर्त्तिता प्रवर्त्तयिता। अन्तर्भावितोऽत्र ण्यर्थः। ग्रामद्वयमध्यवर्त्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्यास्येयं भूरस्येयमित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्य्यात्। यदा तस्यां भूमावन्यतरस्योपकारातिशयो दृश्यते तदा तस्यैव ग्रामस्य सकला भूः समर्पणीया॥

यथाह मनुः। सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिरिति। असत्यामप्यत ज्ञावाप्रज्ञायामस्याः स्मृतेर्न्यायमूलतां द्योतयितुमतिदेशमाह॥१५६॥

**आरामायतनग्रामनिपानोद्यानवेश्मसु। एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु॥१५७॥**

आरामः पुष्पफलोपचयहेतुर्भूभागः। आयतनं निवेशनं पशालकूटाद्यर्थं विभक्तो भूप्रदेशः। ग्रामः प्रसिद्धः। ग्राम ग्रहणञ्च नगराद्युपलक्षणम्। निपानम्पानीयस्थानं कूपवापी प्रभृतिकम्। उद्यानं क्रीडार्था भूमिः। वेश्म गृहम्। एतेष्वारामादिष्वयमेव सामन्ताद्यादिलक्षणो विधिर्ज्ञातव्यः। तथा प्रवर्षणोद्भूतेषु जलप्रवाहेषु अनयोर्गृहयोर्मध्येन जलौघः प्रवह

स्वमयोर्वैतमेवम्प्रकारे विवादे आहिग्रहणात् प्रासादादिष्वपि प्राचीनएव विधिर्ज्ञेयः वेदितव्यः। तथाच कात्यायनः॥

क्षेत्रकूपतडागानां केदारारामयोरपि। गृहप्रासादावसथ नृपदेवगृहेषु चेति॥ सीमानिर्णयमुक्त्वा तत्प्रसङ्गेन मर्य्यादा प्रभेदनादौ दण्डमाह॥१५७॥

मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः॥१५८॥

अनेकक्षेत्रव्यवच्छेदिका साधारणी भूर्मर्य्यादा तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमामतिलङ्घ्याकर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेणाधमोत्तममध्यमदण्डो वेदितव्यः। क्षेत्रग्रहणञ्च गृहारामाद्युपलक्षणार्थं। यदा पुनः स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा द्विशतोदमोवेदितव्यः यथाह मनुः॥

गृहन्तडागमारामं क्षेत्रम्वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतोदमइति। अपह्रियमाणक्षेत्रादि भूयस्त्वपर्य्यालोचनया कदाचिदुत्तमोपि दण्डः प्रयोक्तव्यः। अतएवाह॥

बधः सर्व्वस्वहरणं पुरान्निर्व्वासनाङ्कने। तदङ्गच्छेद इत्युक्तोदण्डउत्तमसाहसइति। यः पुनः परक्षेत्रे सेतुकूपादि कम्प्रार्थनयार्थदानेन वा लब्धानुज्ञोनिर्म्मातुमिच्छति तं निषेधतः क्षेत्रस्वामिनएव दण्डइत्यतआह॥ १५८॥

न निषेध्योल्पबाधस्तु सेतुः कल्याणकारकः
परभूमिं हरन् कूपः स्वल्पक्षेत्रोबहूदकः॥ १५९॥

परकीयां भूमिमपहरन्नाश्रयन्नपि सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः स चेदीषत्पीडाकरोबहूपकारकश्च भवति। कूपस्याल्पक्षेत्रव्यापित्वेनाल्पबाधाबहूदकत्वेन बहूपकारकोनैव निवारनीयः। कूपग्रहणञ्च वापीपुष्करिण्याद्युपलक्षणार्थम्। यदा पुनरसौ सर्व्वं क्षेत्रवर्त्तितया बहुबाधोनद्यादिसमीपक्षेत्रवर्त्तितया वा अल्पोपकारस्तदासौ निषेध्य इत्यर्थादुक्तम्भवति। सेतोश्च द्वैविध्यमुक्तम् नारदेन॥

सेतुश्च द्विविधोज्ञेयः खेयोबन्ध्यस्तथैव च। तोयप्रवर्तनात्खेयोबन्ध्यः स्यात्तन्निवर्तनादिति। यदा त्वन्यनिर्मितं सेतुम्भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्व्वस्वामिनन्तद्वंश्यन्नृपं वा पृष्ट्वैव संस्कुर्यात्। यथाह नारदः॥

पूर्व्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनन्तु यः। सेतुम्प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत्॥ मृतेतु स्वामिनि पुनस्तद्वंश्येवापि

मानवे। राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनमिति। क्षेत्र स्वामिनमप्युपदिष्टमिदानीं सेतोः प्रवर्तयितारमपि आह ॥ १५९ ॥

स्वामिने योनिवेद्यैव क्षेत्रे सेतुम्प्रवर्तयेत्। उत्पन्ने स्वामिनोभोगस्तदभावे महीपतेः॥ १६० ॥

क्षेत्रस्वामिनमनभ्युपगम्य तदभावे राजानम्वा यः पर क्षेत्रे सेतुम्प्रवर्तयत्यसौ न फलभाग्भवत्यपितु तदुत्पन्ने फले क्षेत्रस्वामिनोभोगस्तदभावे राज्ञः। तस्मात्प्रार्थनयार्थदानेन वा क्षेत्रस्वामिनन्तदभावे राजानम्वाप्यनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीय इति तात्पर्य्यार्थः। क्षेत्रस्वामिना सेतुर्न प्रतिषेध्यइ त्युक्तमिदानीं तस्यैव प्रसक्तानुप्रसक्त्या कर्चिद्दध्वन्तरमाह ॥ १६० ॥

फालाहतमपि क्षेत्रं न कुर्य्याद्योन कारयेत्। स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्॥ १६१ ॥

यः पुनः क्षेत्रस्वामिनः पार्श्वेहमिदं क्षेत्रं कृषामीत्यङ्गीकृत्य प्रसादुत्सृजति न चान्येन कर्षयति तत्र क्षेत्रं यद्यपि फाला

न्तमीषद्गुणेन विदारितं न सम्यग्बीजवापार्हं तथापि तत्क्ष
ष्टस्य फलं यावत्तत्रोत्पत्स्यते सामन्तादिकल्पितम् तावद्दत्तौ
कर्षकोदापनीयः। तच्च क्षेत्रं पूर्व्वकर्षकादाच्छिद्यान्येन कार
येत् ॥ १६१ ॥

॥ इतिसीमाविवादप्रकरणम् ॥

व्यवहारपदानां परस्परं हेतुहेतुमद्भावात्तेषामाद्यन्तपा
दानमित्यादिपाठक्रमेण विवक्षित इति व्युत्क्रमेण स्वामिपाल
विवादोऽभिधीयते॥

माषानष्टौ तु महिषी शस्यघातस्य कारिणी।
दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम् ॥ १६२ ॥

परशस्यविनाशकारिणी महिषी अष्टौ माषान् दण्ड
नीया। गौस्तदर्द्धं चतुरो माषान् अजामेषास्तु माषद्वयं दण्ड
नीयाः। महिष्यादीनान्दण्डसम्बन्धाभावात्तत्स्वामी पुरुषोऽत्र
च्यते। माषश्चात्र ताम्रिकपणस्य विंशतिमतो भागः ॥

माषो विंशतिमो भागः पणस्य परिकीर्तित इति नारद
स्मरणात्। एतच्चाज्ञानविषयम्। ज्ञानपूर्व्वे तु॥

पणस्य पादौ द्वौ गान्तु द्विगुणं महिषीं तथा। तथाजाविक
वत्सानाम्पादो दण्डः प्रकीर्त्तितः इति स्मृत्यन्तरोक्तम्। यत्पुन
र्नारदेनोक्तम्॥

आषक्रान्द्रापविहृण्डं द्वौ माषौ महिषीं तथा। तथा आविकवत्सानां दण्डः स्यादर्धमाषिकइति। तत्पुनः प्ररोह योग्यमूलावशेषभक्षणविषम्। अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह॥ १६२॥

## भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणोदमः।

यदि पशवः परक्षेत्रे शस्यभक्षयित्वा तत्रैवानिवारिताः शेरते। तदा यथोक्ताद्दण्डाद्द्विगुणदण्डोवेदितव्यः॥

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणइति वचनात्। क्षेत्रान्तरे पश्वन्तरे चातिदेशमाह॥ ०॥

## समभेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्॥ १६३॥

विवीतः प्रचुरतृणकाष्ठोरक्ष्यमाणः परिगृहीतोभूप्रदेशस्त दुपघातेऽपीतरक्षेत्रवद्दण्डसमन्दण्डमेषां महिष्यादीनामित्यात् खराश्वोष्ट्रस्य खरोष्ट्रं तन्महिषीसमं महिषी यत्र यादृशेन दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम्। सस्योपरोधकत्वे खरोष्ट्रयोः प्रत्येकं महिषी तुल्यत्वाद्दण्डस्य चापराधानुसारित्वात्खरोष्ट्रमिति समा

द्वारेण विवक्षितः । परशस्यनाशे गोस्वामिनो दण्ड उक्तः इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह ॥ १६३ ॥

यावत्शस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम् ।
गोपस्ताड्यस्तु गोमी तु पूर्व्वोक्तन्दण्डमर्हति ॥१६४॥

शस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम् । यस्मिन् क्षेत्रे यावत्प्र स्तालधान्यादिकङ्गवादिभिर्विनाशितन्तावत्क्षेत्रफलमेतावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितन्तत्क्षेत्रस्वामिने गोमी दापनीयः । गोपस्तु ताडनीय एव न फलन्दापनीयः । गोपस्य ताडनं पूर्व्वोक्तधनदण्डसहितमेव । पालदोषेण शस्यस्य नाशे द्रष्टव्यः ॥

या नष्टा पालदोषेण गौस्तु शस्यानि नाशयेत् । न तत्र गोमिनो दण्डः पालस्तद्दण्डमर्हतीति वचनात् । गोमी पुनः स्वापराधेन शस्यनाशे पूर्व्वोक्तन्दण्डमेवार्हतीति न ताडनम् । फलदानं पुनः सर्व्वत्र गोमिन एव । तत्फलपुष्टमहिष्यादि क्षीरोपभोगद्वारेण तत्क्षेत्रफलभागित्वात् । गवादिभक्षिताविशिष्टफलादिकङ्गोमिनैव ग्रहीतव्यम् । मध्यस्थकल्पितमौल्य दानेन क्रीतप्रायत्वात् । अतएव नारदः ॥

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते। सामन्तानुमतं देयन्धान्यं यत्तत्र वापितम्। पलालङ्गोमिने देयं धान्यं वै कर्षकस्य त्विति। क्षेत्रविशेषेऽपवादमाह ॥ १६४ ॥

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते।
अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १६५ ॥

पथि मार्गसमीपवर्त्तिनि क्षेत्रे ग्रामविवीतसमीपवर्त्तिनि च क्षेत्रे कामतोगोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः। दोषाभावप्रतिपादनञ्च दण्डाभावार्थं विनष्टशस्यमौल्यदानप्रतिषेधार्थञ्च। कामचारे कामतश्चारणे चौरवत् चौरस्य यादृशो दण्डः तादृशं दण्डमर्हति। एतच्चानावृतक्षेत्रविषयम्॥

तथापरिवृतन्धान्यम्भिन्द्युः पशवोयदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति ॥

दण्डाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात्। आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोस्त्येव। वृत्तिकरणञ्च तेनैवोक्तम्॥

वृत्तिञ्च तत्र कुर्व्वीत यामुष्ट्रोनावलोकयेत्। छिद्रं निवारयेत्सर्व्वं श्वसूकरमुखानुगमिति। पशुविशेषेऽपि दण्डाभावमाह ॥ १६५ ॥

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषां न ते मोच्या दैवराजपरिप्लुताः॥ १६६ ॥

महांश्चासावुक्षा च महोक्षः वृषः सेक्ता। उत्सृष्टपशवः वृषोत्सर्गविधानेन देवतोद्देशेन त्यक्ताः। सूतिकाप्रसूता अनिर्दशाहा। आगन्तुकः स्वयूथात्परिभ्रष्टो देशान्तरादागतः। एते मोच्याः। परशस्यभक्षणेऽपि न दण्ड्याः। येषाञ्च पालो न विद्यते तेपि दैवराजपरिप्लुताः दैवराजोपहताः शस्यनाशकारिणो न दण्ड्याः। आदिग्रहणात् हस्त्यश्वादयो गृह्यन्ते। ते चोशनसोक्ताः॥

अदण्ड्याहस्तिनोऽश्वाः प्रजापाला हि ते स्मृताः। अदण्ड्याः काणकुण्ठो च ये शश्वत्कृतलक्षणाः॥ अदण्ड्यागन्तुकी गौश्च सूतिका चाभिसारिणी। अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव चेति। अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्डत्वासम्भवात्। दृष्टान्तार्थमुपादानं यथोत्सृष्टपशवो न दण्ड्या एवं महोक्षादय इति। गोस्वामिन उक्तमिदानीं गोपं प्रत्युपदिश्यते॥ १६६ ॥

यथार्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा। प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः॥ १६७॥

गोस्वामिना प्रातःकाले यथा गणयित्वा समर्पिताः पशवस्तथैव सायङ्काले गोपोगोमिने पशून् विगणय्य प्रत्यर्पयेत्। प्रमादेन स्वापराधेन मृतान्नष्टांश्च पशून् कृतवेतनः प्रकल्पितवेतनो गोपः स्वामिने दाप्यः। वेतनकल्पना च नारदेनोक्ता गवां शताद्वत्सतरी धेनुः स्यात् द्विशताभृतिः। प्रतिसम्वत्सरङ्गोपे सन्दोहश्चाष्टमेऽहनीति। प्रमादनाशश्च मनुना स्पष्टीकृतः॥

नष्टं जग्धञ्च कृमिभिः श्वहतन्विषमे मृतम्। हीनम्पुरुषकारेण प्रदद्यात्पाल एवत्विति। प्रसह्य चौरैरपहृतान्न दाप्यः यथाह मनुः॥

विक्रम्य तु हृतश्चौरैर्न पालोदातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसतीति। दैवराजमृतानां पुनः कर्णादि प्रदर्शनीयम्॥

कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम्। पशुस्वामिषु दद्यात्तु मृतेष्वङ्गानि दर्शयन्निति मनुस्मरणात्। किञ्च॥१६७॥

पालदोषविनाशे च पाले दण्डोविधीयते।
अर्द्धत्रयोदशपणः स्वामिनोद्रव्यमेव च॥१६८॥

पालदोषेण पशुविनाशे अर्द्धाधिकत्रयोदशपणन्दण्डम्पालोदाप्यः। स्वामिनश्च द्रव्यन्निनष्टपशुमूल्यं मध्यस्थकल्पितम

कृष्ट्रपरिमाणार्थः श्लोकोऽन्यत्पूर्वोक्तमेव। गोप्रचाराङ्गोप्रचार माह ॥१६८॥

ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा।
द्विजस्तृणैधःपुष्पाणि सर्व्वतः सर्व्वदा हरेत् ॥१६९॥

ग्रामेच्छया ग्रामजनेच्छया भूम्यल्पमहत्त्वापेक्षया राजेच्छया वा गोप्रचारः कर्तव्यः। गवादीनाञ्चरणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। द्विजस्तृणे न्धनाभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्व्वतः स्वव दनिवारितश्चाहरेत्। फलानि लपावृतादेव गोभ्यर्थं तृण मेधांसि वीरुधवनस्पतीनाञ्च पुष्पाणि स्ववदाददीत॥

तत् फलानि चापरिवृतानामिति गौतमस्मरणात्। एतच्च परिगृहीतविषयम्। अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः। यथा तेनैवोक्तं॥

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्विति। यत्पुन रुक्तम्॥

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अना पृच्छन् हि गृह्णानो हस्तच्छेदनमर्हतीति तत् द्विजव्यतिरिक्त विषयमनापद्विषयं वा गवादिव्यतिरिक्तविषयं वा। इदमपर ञ्चगवादीनां स्थानागमनसौकर्य्यार्थमुच्यते॥ १६९ ॥

धनुःशतम्परीणाहो ग्रामक्षेत्रान्तरम्भवेत्। द्वेशते कर्व्वटस्य स्यान्नगरस्य चतुःशतम्॥ १७०॥

ग्रामक्षेत्रयोरन्तरन्धनुःशतपरिमितम्परीणाहः। सर्व्वतो दिशमनुशस्यरक्षार्थं कर्व्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य द्वे शते परीनाहोनगरस्य बहुजनसङ्कीर्णस्य धनुषाञ्चतुः शत परिमितमन्तरं कार्य्यम्॥

॥०॥ इति स्वामिपालविवादप्रकरणम्॥०॥

सम्प्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते। तस्य च लक्षणन्नारदेनोक्तम्॥

निक्षिप्तम्वा परद्रव्यन्नष्टं लब्ध्वापहृत्य वा। विक्रीयतेऽसमक्षं यत्सज्ञेयोस्वामिविक्रयइति। तत्र किमित्याह॥

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते। हीनाद्रहोही नमूल्ये वेलाहीने च तस्करः॥ स्वमात्मसम्बन्धिद्रव्यं अन्यविक्रीत मस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात्। अस्वामि विक्रयस्य स्वत्वहेतुत्वाभावात्। विक्रीतग्रहणन्दत्ताहितयोरुप लक्षणार्थं अस्वामिकृतत्वेन तुल्यत्वात्। अतएवोक्तम्॥

अस्वामिविक्रयन्दत्तमाधिञ्च विनिवर्त्तयेदिति क्रेतुः पुनर प्रकाशिते गोपिते क्रये दोषोभवति। तथा हीनात्तद्द्रव्यागमो पायहीनात्। रहसि चैकान्ते सम्भाव्य द्रव्यादपि हीनमूल्ये

ऽल्पतरेण मूल्येन च क्रये वेलाहीने वेलया हीनोवेलाहीनः क्रयोरात्र्यादौ कृतः तत्र च क्रेता तस्करो भवति। तस्करवत् दण्डभाग्भवतीर्थः। यथोक्तम्॥

द्रव्यमस्वामिविक्रीतम्प्राप्य स्वामी तदाप्नुयात्। प्रकाश क्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयादिति स्वाम्यभियुक्तेन क्रेत्रा किं कर्त्तव्यमित्यतश्चाह॥ १७०॥

नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम्।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत्॥ १७१॥

नष्टमपहृतं वान्यदीयं क्रयादिना प्राप्य हर्त्तारं विक्रेतारं ग्राहयेच्चौरोद्धरणकादिभिः। आत्मविशुध्यर्थं राजदण्डाप्राप्त्यर्थं च। अथाविदितदेशान्तरङ्गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तो विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनन्नाष्टिकस्य समर्पयेत् तावतैवासौ शुद्धोभवतीति श्रीकराचार्य्येण व्याख्यातम्। तदिदमनुपपन्नम्॥

विक्रेतुर्द्दर्शनाच्छुद्धिरित्यनेन पौनरुक्त्यप्रसङ्गात्। अतोन्यथा व्याख्यायते। नष्टापहृतमिति नाष्टिकप्रत्ययमुपदेशः। नष्टमपहृतम्वा आत्मीयन्द्रव्यमासाद्य क्रेतृहस्तस्थं ज्ञात्वा तं हर्त्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत् देशकालातिपत्तौ देश

कालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात्प्राक् पलायनाशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्प्पयेत्। पाहिते हर्त्तरि किं कर्त्तव्यमित्यत आह॥ १७१॥

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपोदमम्।
क्रेतामूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी॥१७२॥

यद्यसौ गृहीतः क्रेता न मयेदमपहृतं अन्यसकाशात् प्राप्तमिति वक्ति तदा तस्य क्रेतुर्विक्रेतृदर्शनमात्रेण शुद्धि र्भवति न पुनरसावभियोज्यः। किन्तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः। यथाह बृहस्पतिः॥

मूले समाहृते क्रेता नाभियोज्यः कथञ्चन। मूलेन सह वादस्तु नाष्टिकस्य विधीयतइति। तस्मिंश्च विवादे यद्यस्वामि विक्रयनिश्चयोभवति तदा तस्य नष्टापहृतस्य गवादिद्रव्यस्य योविक्रयी विक्रेता तस्य सकाशात्स्वामी नाष्टिकः स्वीयं द्रव्यम वाप्नोति नृपश्चापराधानुरूपन्दण्डं क्रेता च मूल्यमवाप्नोति। अथासौ देशान्तरगतस्तदायोजनसङ्ख्यया नयनार्थं कालो देयः॥

प्रकाशम्बा क्रयं कुर्य्यान्मूलम्बापि समर्प्पयेत्। मूलानयन कालश्च देयस्तत्राध्वसङ्ख्ययेति स्मरणात्। अथाविज्ञातदेशतया

मूल्यमाहर्त्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति। अथमाहार्य्यमूल्यस्तु क्रयमेव विशोधयेदिति मनुवचनात्। यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूल्यं न प्रदर्शयति तदा स एव दण्डभाग्भवतीति ॥ १७२ ॥

अनुपस्थापयन्मूलं क्रयम्वाप्यविशोधयन्। यथाभियोग ध्वनिने धनन्दाप्योदमञ्च स इति स्मरणात्। स्वं लभेतान्य विक्रीतमित्युक्तं। तत्तिपुना किं कर्त्तव्यमित्यत आह ॥ १७२ ॥

आगमेनोपभोगेन नष्टम्भाव्यमतोन्यथा। पञ्च बन्धोदमस्तस्य राज्ञे तेनाविभाविते ॥ १७३ ॥

आगमेन रिक्थक्रयादिना उपभोगेन च मदीयमिदन्द्रव्यं तथैवं नष्टमपहृतं वेत्यपि भाव्यं साधनीयन्तत्स्वामिना अतो ऽन्यथा तेन स्वामिना अविभावितेः पञ्चबन्धोनष्टद्रव्यस्य पञ्च मांशोदमोनाष्टिकेन राज्ञे देयः। अत्रैवायं क्रमः। पूर्व्वं स्वामी नष्टमात्मीयं साधयेत्ततः क्रेता चौर्य्यपरिहारार्थं मूल्यलाभाय च विक्रेतारमानयेत्। अथानेतुन्न शक्नोति तदा स्वदोषपरि हाराय क्रयं शोधयित्वा द्रव्यं नाष्टिकस्य समर्प्पयेदिति। तस्करस्य प्रच्छादकस्याह ॥ १७३ ॥

हृतं प्रनष्टं योद्रव्यम्परहस्तादवाप्नुयात्। अनिवेद्य नृपे दण्ड्यः सतु षण्णवतिम्पणान्॥ १७४॥

हृतमपहृतम्वा चौरादिहस्तगतन्द्रव्यमनेन मदीयन्द्रव्यमपहृतमिति नृपस्यानिवेद्यैवं दर्पादिना योगृह्णात्यसौ षड्णवतिम्पणान्दण्डनीयस्तस्करप्रत्याहृतत्वेन दुष्टत्वात्। राजपुरुषानीतं प्रत्याह॥ १७४॥

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतं। अर्व्वाक् सम्बत्सरात्स्वामी हरेत परतोनृपः॥ १७५॥

यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्व्वा नष्टमपहृतन्द्रव्यं राजपार्श्वं प्रत्यानीतन्तदा संवत्सरादर्व्वाक् प्राप्तश्चेत्स्वाम्किस्तद्द्रव्यमवाप्नुयात्। ऊर्द्ध्वं पुनः सम्बत्सराद्राजा गृह्णीयात्। स्वपुरुषानीतञ्च द्रव्यं जनसमूहेषूद्घोष्य यावत्सम्बत्सरं राज्ञा रक्षणीयम्। तथाह गौतमः॥

प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य सम्बत्सरं राज्ञा रक्ष्यमिति। यत्पुनर्म्मनुना विध्यन्तरमुक्तम्॥

प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्। अर्व्वाक् त्र्यब्दाद्धरेत्स्वामी परतोनृपतिर्हरेदिति। तच्छ्रुतवृत्तसम्पन्नब्राह्मणविषयम्। रक्षणनिमित्तं षड्भागादिग्रहणञ्च तेनैवोक्तं॥

आददीताथ षड्भागमनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतान्धर्ममनुस्मरन्निति। तृतीयद्वितीयप्रथमवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः। प्रपञ्चितञ्चैतत्पुरस्तात्। मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे ग्रपवादमाह ॥ १७५ ॥

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे। महिषोष्ट्रगवां द्वौ द्वौ पादम्पादमजाविके ॥ १७६ ॥

एकशफे ग्रश्वादौ ग्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात्। मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान् महिषोष्ट्रगवां रक्षणनिमित्तम्प्रत्येकं द्वौ द्वौ पणौ ग्रजाविके पुनः प्रत्येकम्पादम्पादं दद्यादिति सर्व्वत्रानुषज्यते। ग्रजाविकमिति समासनिर्द्देशेपि पादम्पादमिति वीप्सावलात्प्रत्येकं सम्बन्धोगम्यते ॥ ० ॥ इत्यस्वामिविक्रयप्रकरणम् ॥ ० ॥

ग्रधुना विहिताविहितमार्गद्वयाश्रयतया दत्तानपाकर्म्म दत्ताप्रदानिकमिति च सञ्ज्ञाभिधानद्वयं लब्धं। व्यवहारपदमभिधीयते। तत्स्वरूपञ्चारदेनोक्तम् ॥

दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति। दत्ताप्रदानिकं नाम व्यवहारपदं हि तदिति। असम्यग्विहितमार्गाश्रयेन द्रव्यन्दत्वा पुनरादातुमिच्छति। यस्मिन् विवादपदे दत्ताप्रदा

निकं नाम व्यवहारपदं दत्तस्याप्रदानं पुनर्हरणं यस्मिन्हा नाख्ये तद्दत्ताप्रदानिकं नाम व्यवहारपदमित्युदितमार्गाश्च लेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदन्दत्तानपकर्मेत्युच्यते भवति। दत्तस्य अनपकर्म अपुनरादानं यत्र दानाख्ये विवाद पदे तद्दत्तानपकर्म्म तच्च देयादेयादिभेदेन चतुर्व्विधम्। यथाह नारदः॥

अथ देयमदेयञ्च दत्तम्वा दत्तमेव च। व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्व्विधइति। तत्र देयमिति अनिषिद्धदानक्रिया योग्यमुच्यते। अदेयमस्वतया निषिद्धतया वा दानानर्हम्। तत्पुनः प्रकृतिस्थे नदत्तमव्यावर्त्तनीयं तद्दत्तमुच्यते। अद त्तन्तु यत्प्रत्याहरणीयन्तत्कथ्यते। तदेतत्सङ्क्षेपतो निरूपयित माह॥ १७६॥

स्वंकुटुम्बाविरोधेन देयं दारसुतादृते। नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम्॥१७७॥

स्वमात्मीयं कुटुम्बाविरोधेन कुटुम्बभरणावशिष्टमिति यावद्दद्यात्। तद्भरणस्यावश्यकत्वात्। तथा च मनुः॥

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः। अप्य कार्य्यशतं कृत्वा भर्त्तव्यामनुरब्रवीदिति। कुटम्बाविरोधनेत्य

नेन देयमेकविधन्दर्शयति। स्वन्द्यादित्यनेन चास्वभूतानां अन्वाहितयाचितकाधिसाधारणनिक्षेपाणामन्यानामप्यदेयत्वं व्यतिरेकतोदर्शितं। यत्पुनर्नारदेनाष्टविधत्वमदेयानामुक्तम्॥

अन्वाहितं याचितकमाधिः साधारणञ्च यत्। निक्षेपः पुत्र दारांश्च सर्व्वखञ्चान्वये सति॥ आपत्स्वपि हि कष्टासु वर्त्त मानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुत मिति। एतददेयत्वमसाचाभिप्रायेण। न पुनः स्वत्वाभावाभि प्रायेण पुत्रदारसर्व्वस्वप्रतिश्रुतेषु स्वत्वस्य सद्भावात्। अन्वा हितादीनां स्वरूपञ्च प्रागेव प्रपञ्चितम्। स्वन्द्यादित्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसक्तौ प्रतिषेधमाह। दारसुतादृते दारसुतव्यतिरिक्तं स्वन्द्यात्। न दारसुत मित्यर्थः। तथा पुत्रपौत्राद्यन्वये विद्यमाने सर्व्वं धनन्न दद्यात्। पुत्रानुत्पाद्य संस्कृत्य वृत्तिञ्चैषां प्रकल्पयेदिति स्मरणात्। तथा। हिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मै न देयम्। एव न्दारसुतादिव्यतिरिक्तन्देयमुक्त्वा प्रसङ्गाद्देयधनग्रहणञ्च प्रति ग्रहोवा प्रकाशमेव कर्त्तव्यमित्याह॥ १७७॥

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः।
देयम्प्रतिश्रुतञ्चैव दत्वा नापहरेत्पुनः॥ १७८॥

प्रतिग्रहश्चप्रतिग्रहः स प्रकाशः कर्त्तव्यः विवादनिराकर णार्थं। स्थावरस्य विशेषतः प्रकाशमेव ग्रहणार्य्यन्तस्य सुवर्णा दिवद्गृहान्तनि स्थितस्य दर्शयितुमशक्यत्वात्। एवमावश्यक मुक्त्वा प्रकृतमनुसरन्नाह। देयम्प्रतिश्रुतञ्चैव यस्मै धर्मार्थं प्रतिश्रुतन्तस्मै देयमेव यथासौ धर्मात्प्रच्युतो न भवति। अच्युतेन पुनर्दातव्यं। प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यादिति गौतमस्मरणात्। दत्त्वा नापहरेत्पुनः। न्यायमार्गेण यद्दत्त न्सप्तविधमपि पुनर्नापहर्त्तव्यम्। किन्तु तथैवानुमन्तव्यम्। यत्पुनरन्यायेन दत्तं तददत्तं षोडशप्रकारमपि प्रत्याहर्त्तव्य मेवेत्यर्थादुक्तम्भवति। नारदेन च। दत्तं सप्तविधम्प्रोक्तमदत्तं षोडशात्मकमिति प्रतिपाद्य दत्तादत्तयोः स्वरूपम्विवृतम्॥

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः। स्त्रीशुल्कानुग्रहा र्थञ्च दत्तन्दानविदो विदुः॥ अदत्तन्तु भयक्रोधशोकवेगरुजा न्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥ बालमूढा स्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम्। कर्त्ता ममेदङ्कर्मेति प्रति लाभेच्छया च यत्॥ अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्म संहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतमिति। अयमर्थः। पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्। भृतिर्वेतनम् कृतकर्म्मणे दत्तम्। तुष्ट्या वन्दिचारणादियाहादिभ्यो दत्तम्। स्नेहात् दुहितृपुत्रादिभ्यो दत्तम्। प्रत्युपकारत उपकृतवते प्रत्युपकाररूपेण दत्तम्। स्त्रीशुल्कं परिणयनार्थं कन्याज्ञाति

भ्यो यद्दत्तं यच्चानुग्रहार्थमदृष्टार्थन्दत्तन्तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयं। भयेन बन्दिग्राहादिभ्यो दत्तम्। क्रोधेन पुत्रादिवैरनिर्य्यातनायान्यस्मै दत्तं। पुत्रवियोगादिनिमित्तशोकाविष्टेन दत्तम्। उत्कोचेन कार्य्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम्। परिहासेनोपहासेन दत्तम्। एकः स्वद्रव्यमन्यस्मै ददात्यन्योपि तस्मै ददातीति दानव्यत्यासः। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य ददाति। बालेनाप्राप्तषोडशवर्षेण। मूढेन लोकवेदानभिज्ञेन। अस्वतन्त्रेण पुत्रदासादिना आर्त्तेन रोगाभिभूतेन। मत्तेन मदनीयप्रमत्तेन। उन्मत्तेन वातिकाद्युन्मादग्रस्तेन वा अपवर्जितन्दत्तम्। तथायं मदीयमिदङ्कर्म्म करिष्यतीति प्रतिलाभेच्छया दत्तम्। अचतुर्वेदाय चतुर्वेदोहमित्युक्तवते दत्तम्। यज्ञङ्करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तमित्येवं षोडशप्रकारमपि दत्तमदत्तमित्युच्यते प्रत्याहरणीयत्वात्। आर्त्तदत्तस्यादत्तत्वं धर्म्मकार्य्यव्यतिरिक्तविषयम्॥

स्वस्थेनार्त्तेन वा दत्तं श्रावितन्धर्म्मकारणात्। अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशय इति कात्यायनस्मरणात्। तथेदमपरसंक्षिप्तार्थवचनं सर्व्वविवादसाधारणम्॥

योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत् तत्सर्व्वं विनिवर्त्तयेदिति। योग उपाधिः। योगेनोपाधि-

विशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधित्रिगमेताम्वि
क्रयादीन्निनिवर्त्तयेदित्यस्यार्थः। यः पुनः योऽप्रकारमप्य
दत्तं गृह्णाति। यश्चादेयमप्रयच्छति। गृह्णात्यदत्तं योलोभाद्य
श्चादेयं प्रयच्छति। अदेयदायकोदण्ड्यस्तथादत्तप्रतीच्छक
इति ॥०॥ इतिदत्ताप्रदानिकं नामप्रकरणम् ॥०॥

क्रीतानुशयः कथ्यते। तत्स्वरूपञ्च नारदेनोक्तम् ॥

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहुमन्यते। क्रीतानुशय
इत्येतद्विवादपदमुच्यते ॥ तत्र च यस्मिन्नहनि पण्यं क्रीतन्त
स्मिन्नेवाह्नि तदविकृतमप्रत्यर्प्पणीयमिति तेनैवोक्तम् ॥

क्रीत्वा मूल्येन यत्पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रति
देयन्तत्तस्मिन्नेवाविचतमिति। द्वितीयादिदिनेतु प्रत्यर्प्पणे
विशेषस्तेनैवोक्तः ॥

द्वितीयेह्नि ददत्क्रेता मूल्यात्रिंशांशमाहरेत्। द्विगुणन्तु
तृतीयेह्नि परतः क्रेतुरेवतदिति। परतोनुशयोन कर्त्तव्य
इत्यर्थः। एतच्च वीजादिव्यतिरिक्तोपभोगादिविनश्वरवस्तु विष
यम्। वीजादिक्रये पुनरन्यएव प्रत्यर्प्पणेऽवधिरित्याह ॥१७८॥

दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्। वीजायो
वाह्यरत्नस्त्रीदोह्यपुंसाम्परीक्षणम् ॥ १७९ ॥

बीजं व्रीह्यादि बीजम्। अयो लोहम्। वाह्यो बलीवर्दादिः। रत्नं मुक्ताप्रवालादि। स्त्री दासी। दोह्यं महिष्यादि। पुमान् दासः। एषां बीजादीनां यथाक्रममेव दशाहादिकः परीक्षाकालो विज्ञेयः। परीक्ष्यमाणे च बीजादौ यद्यसम्यक् बुद्ध्यानुशयो भवति तदा दशाहाद्यभ्यन्तर एव क्रयनिवृत्तिः। न पुनरूर्ध्व-मित्युपदेशप्रयोजनम्। यत्तु मनुवचनम्॥

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यन्दद्याच्चैवाददीतवेति। तद्वस्त्रलोहाद्यव्यतिरिक्तोपभोगाविनश्वरगृहक्षेत्रयानशयनासनादिविषयं। सर्वञ्चैतदपरीक्षितक्रीतविषयम्। यत्तु वः परीक्षितमपुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतन्तद्विक्रेत्रे न प्रत्यर्पणीयम्॥ तदुक्तम्॥

क्रेता पण्यं परीक्षेत प्राक्स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतम्विक्रेतुर्न भवेत्पुनरिति। दोह्यादिपरीक्षाप्रसङ्गेन सुवर्णादेरपि परीक्षामाह॥१७९॥

**अग्नौ सुवर्णमक्षीणं रजते द्विपलं शतम्। अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि॥१८०॥**

अग्नौ प्रताप्यमानं सुवर्णं न क्षीयते। अतः कटकादिनिर्माणार्थं यावत्स्वर्णकारहस्ते प्रक्षिप्तन्तावत्तुलितन्तैः प्रत्यर्पणीयम्।

इतरयोस्त्रयस्ताम्रयोरप्यस्य। रजते तु पलशते प्रताप्यमाने पलद्वयं क्षीयते। अष्टौ त्रपुणि सीसे च शतद्वयमनुवर्त्तते त्रपुणि सीसे च शतपले प्रताप्यमाने अष्टौ पलानि क्षीयन्ते। ताम्रे पञ्च दशायसि ताम्रे पलशते पञ्चपलानि अयसि दशपलानि क्षीयन्ते अत्रापि शतद्वयमेव। कांस्यस्य तु त्रपुताम्रयोनित्वात्तदनुसारेण क्षयः कल्प्यः। ततोऽधिकक्षयकारिणः शिल्पिनो दण्ड्याः। अधुना कम्बलादौ वृद्धिमाह ॥ १८० ॥

शते दश पला वृद्धिरौर्णे कार्पाससौत्रिके। मध्ये पञ्चपला वृद्धे सूक्ष्मे तु त्रिपला मता ॥ १८१ ॥

स्थूलैरौर्णसूत्रैर्यत्कम्बलादि क्रियते तस्मिञ्छतपले दश पला वृद्धिर्बोद्धव्या। एवङ्कार्पाससूत्रनिर्मिते पटादौ वेदितव्या। मध्ये मध्यमसूत्रनिर्मिते पटादौ पञ्चपला वृद्धिः। सुसूक्ष्मसूत्ररचिते शते त्रिपला वृद्धिर्बोद्धव्या। एतच्च प्रक्षालितवासोविषयम्। द्रव्यान्तरे विशेषमाह ॥ १८१ ॥

कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः। न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च ॥ १८२ ॥

कार्मिकङ्कर्मणा चित्रेण निर्मितम्। यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकञ्चित्रसूत्रैः क्रियते तत्कार्मिकमित्युच्यते। यत्र प्रावारादौ रोमाणि बध्यन्ते स रोमबद्धः तत्र त्रिंशत्तमो भागः क्षयो वेदितव्यः। कौशेये कोशप्रभवे वाल्कलेषु वल्कलनिर्मितेषु वसनेषु वृद्धिह्रासौ न स्तः किन्तु यावद्वयनार्थं कुविन्दादिभ्यो दत्तं तावदेव प्रत्यादेयम्। द्रव्यानन्त्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह॥ १८२॥

देशङ्कालञ्च भोगञ्च ज्ञात्वा नष्टे बलाबलम्।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयं॥ १८३॥

शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते द्रव्याणां कुशला द्रव्यवृद्धिक्षयाभिज्ञा देशकालमुपभोगन्तथा नष्टद्रव्यस्य बलाबलं सारासारताञ्च परीक्ष्य यत्कल्पयन्ति तदसंशयं शिल्पिनो दाप्याः॥ ०॥ इति क्रीतानुशयप्रकरणम्॥ ०॥

साम्प्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते। तत्स्वरूपन्नारदेनोक्तम्॥

अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते। अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत इति। आज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्योन सम्पादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्

शुश्रूषकश्च पञ्चप्रकारः। शिष्योऽन्तेवासी भृतकोऽधिकर्म्मकृच्चेति तेषामाद्याश्चत्वारः कर्म्मकारा इत्युच्यन्ते ते च शुभकर्म्मकारिणः। दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्म्मकारिणः। तदिदन्नारदेन स्पष्टीकृतम्॥

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्व्विधः कर्म्मकरस्तेषान्दासास्त्रिपञ्चकाः॥ शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्म्मकृत्। एते कर्म्मकरा ज्ञेया दासास्तु गृहजादयः॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्म्मनीषिणः। जातिकर्म्मकरस्तूक्तो विशेषो वृत्तिरेव च॥ कर्म्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभन्दासकर्म्मोक्तं शुभं कर्म्मकृतां स्मृतम्॥ गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्। इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः। अशुभङ्कर्म्म विज्ञेयं शुभमन्यदतः परमिति॥

तत्र शिष्यो वेदविद्यार्थी। अन्तेवासी शिल्पशिक्षार्थी मूल्येन यः कर्म्म करोति स भृतकः। कर्म्मकुर्व्वतामधिष्ठाता अधिकर्म्मकृत्। अशुचिस्थानं उच्छिष्टप्रक्षेपणार्थं गर्त्तादिकं। अवस्करः गृहमार्ज्जितपांश्वादिनिचयस्थानं। उज्झनन्त्यागः। भृतकश्चात्र त्रिविधः। तदुक्तम्॥

उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः। अधमो भारवाही स्यादित्येवन्त्रिविधो भृत इति। दासः पुनः॥

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः। अनाकालभृतस्तद्वदाहितः स्वामिना च यः॥ मोचितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः। तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः। विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥

गृहे दास्यां जातो गृहजातः। क्रीतो मूल्येन। लब्धः प्रतिग्रहादिना। दायादुपागतः पित्रादिदासः। अनाकालभृतो दुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः। आहितः स्वामिना धनग्रहणेनाधितां नीतः। ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः। युद्धप्राप्तः समरे विजित्य गृहीतः। पणे जितः यद्यस्मिन् विवादे पराजितोऽहन्तदा त्वद्दासो भवामीति परिभाष्य जितः। तवाहमित्युपगतः तवाहन्दास इति स्वयम्प्रतिपन्नः। प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः। कृतः एतावत्कालन्त्वद्दास इत्यभ्युपगमितः। भक्तदासः सर्व्वकालम्भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः। वडवाहृतः वडवा गृहदासी तया हृतस्तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः। य आत्मानम्विक्रीणीते स आत्मविक्रेता इत्येवम्पञ्चदशप्रकाराः। यत्तु मनुना॥

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ। पैतृको दण्डदासश्च सप्तैते दासयोनय इति॥

सप्तविधत्वमुक्तम्। तत्तेषां दासत्वप्रतिपादनार्थं न तु परिसंख्यार्थं। तत्रैषां शिष्यान्तेवासिभृतकाधिकर्म्मकृद्दासानां मध्ये

भृतकवृत्तिः प्रागेव प्रतिपादिता। भाकृतवाप्यधीयीत वक्ष्यामौ निवदयेदित्यादिना। अधिकर्म्मकृन्नकानां भृतिं वेतनदानप्रकरणे वक्ष्यते। गोवाणिज्यकृते कर्षणायनयन तु वेतनमित्यादिना। दासानान्तेषामधिनोक्त धर्मविशेषमनुमाह॥१८३॥

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापिमुच्यते। स्वामी
प्राणप्रदोभक्तत्यागात्तन्निष्क्रयादपि॥१८४॥

बलाद्बलावष्टम्भेन योदासीकृतः। यश्चौरैरपहृत्य विक्रीतः। अपिशब्दादाहितोदत्तश्च समुच्यते। यदि स्वामी न मुञ्चति तर्हि राज्ञा मोचयितव्यः। उक्तञ्च नारदेन॥

चौरापहृतविक्रीता ये च दासीकृताबलात्। राज्ञा मोचयितव्यास्ते दास्यं तेषु हि नेष्यतइति। चौरव्याघ्रादिवद्धस्य स्वामिनः प्राणान्यः प्रददाति रक्षत्यसावपि मोचनीयः। तदिदं सर्व्वदासानां साधारणन्दास्यनिवृत्तिकारणम्॥

यश्चैषां स्वामिनङ्कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभागं लभेत चेति नारदस्मरणात्॥

भक्तदासादीनामातिस्विकमपि मोक्षकारणमुच्यते। अनाकालभृतभक्तदासौ भक्तस्य त्यागात् दासभावादारभ्य स्वामिद्रव्यं यावदुपभुक्तन्तावद्दत्वा मुच्येते। आहितर्णदासौ तु तन्निःक्रयात् यद्गृहीत्वा स्वामिना आहितोयश्च दत्वा धनिनो

ऽसमर्णान्मोचितस्तस्य निःक्रयात्सवृद्धिकस्य प्रत्यर्पणान्मुच्यते। नारदेन विशेषोप्युक्तः।

अनाकालभृतोदास्यान्मुच्यते गोयुगन्ददत्। सम्भचितं यद्दुर्भिक्षे न तच्छुद्ध्येत कर्म्मणा। भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते। आहितोपि धनन्दत्वा स्वामी यद्येनमुद्धरेत्। ऋणन्तु सोदयन्दत्वा ऋणी दास्यात्प्रमुच्यतइति॥

तथा तवाहमित्युपगतयुद्धप्राप्तपणजितकृतवडवाहृता नाञ्च प्रातिस्विकं मोचनकारणन्तेनैवोक्तम्॥

तवाहमित्युपगतोयुद्धप्राप्तः पणे जितः। प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्म्मणा॥ कृतकालव्यपगमात्कृतकोपि विमुच्यते। नियहाद्वडवायास्तु मुच्यते वडवाभृतइति॥

दासेन सह सम्भोगनिरोधादित्यर्थः। तदेवं गृहजातक्रीत लब्धदायप्राप्तात्मविक्रयिणां स्वामिप्राणप्रदानतत्प्रसादरूप साधारणकारणव्यतिरेकेण मोक्षोनास्ति विशेषकारणानभि धानात्। दासमोक्षस्वानेन क्रमेण कर्तव्यः॥

स्वन्दासमिच्छेद्यः कर्त्तुमदासम्प्रीतमानसः। स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा। साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत्। अदासइति चोक्त्वा त्रिः प्राङ्मुखन्तमवास्रजेदिति। तेनैवोक्तं। प्रव्रज्यावसितस्य तु मोक्षोनास्तीत्याह ॥१८४॥

प्रव्रज्यावसितोराज्ञोदासआमरणान्तिकः।

प्रव्रज्या संन्यासस्ततोवसितः प्रच्युतः। अनभ्युपगतप्रायश्चित्त श्चेद्राज्ञएव दासोभवति मरणमेव तद्दासत्वस्यान्तोनान्तरा प्रतिमोक्षोस्ति। वर्णापेक्षया दास्यव्यवस्थामाह॥ ०॥

वर्णानामानुलोम्येन दास्यन्न प्रतिलोमतः॥१८५॥

ब्राह्मणादीनाम्वर्णानामानुलोम्येन दास्यं ब्राह्मणस्य क्षत्रिया दयः क्षत्रियस्य वैश्यशूद्रौ वैश्यस्य शूद्रइत्येवमानुलोम्येन दास्यभावोभवति। न प्रातिलोम्येन। स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापिदासत्वमिष्यतएव। यथाह नारदः॥

वर्णानाम्प्रातिलोम्येन दासत्वं न विधीयते। स्वधर्मत्यागिनो ऽन्यत्र दारवद्दासतामतेति। अन्तेवासिधर्म्मानाह॥ १८५॥

कृतशिल्पोपि निवसेत् कृतकालं गुरोर्गृहे।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः॥१८६॥

अन्तेवासी गुरोर्गृहे कृतकालम्वर्षचतुष्टयमायुर्वेदादिशिल्प शिक्षार्थं त्वद्गृहे वसामीति यावदङ्गीकृतन्तावत्कालम्वसेत्।

यद्यपि वर्णचतुष्टयादर्व्वाक् एव तथापेक्षितशिल्पविद्यः कथञ्चि वसेत्। गुरुप्राप्तभोजनः गुरोः सकाशात्प्राप्तं भोजनं येन स तथोक्तः। तत्फलप्रदः तस्य शिल्पस्य फलमाचार्य्याय प्रददातीति तत्फलप्रदः। एवम्भूतो वसेत्। नारदेन विशेषोप्यत्र दर्शितः॥

स्वशिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया। आचार्य्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम्। आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम्। न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत्। शिक्षयन्तमदुष्टं च आचार्य्यं परित्यजेत्। बलाद्वासयितव्यः स्याद्वधबन्धौ च सोर्हति। शिक्षितोपि कृतं कालमन्तेवासी समाप्नुयात्। तत्र कर्म च यत्कुर्य्यादाचार्य्यस्यैव तत्फलम्। गृहीतशिल्पः समये कृत्वाचार्य्यप्रदक्षिणम्। शिक्षितस्यानुमान्यैनमन्तेवासी निवर्त्तत इति॥

वधशब्दोत्र ताडनार्थः। दोषस्याल्पत्वात्॥ इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदं॥०॥

सम्प्रति संविद्व्यतिक्रमः कथ्यते। तस्य स्वरूपं नारदेन व्यतिरेकमुखेन दर्शितम्। पाषण्डनैगमादीनां स्थितिः समय उच्यते। समयस्यानपाकर्म तद्विवादपदं स्मृतमिति॥

पारिभाषिकधर्मस्य व्यवस्थानं समयस्तस्यानपाकर्म अव्यतिक्रमः परिपालनं तद्व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः। तदुपक्रमार्थं किञ्चिदाह॥१८६॥

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।
त्रैविद्यं वृत्तिमद्ब्रूयात्स्वधर्मः पाल्यतामिति॥१८७॥

राजा स्वपुरे दुर्गादौ स्थानम्भवनगृहादिकं कृत्वा तत्र ब्राह्मणान्न्यस्य स्थापयित्वा तद्ब्राह्मणजातन्त्रैविद्यं वेदत्रयसम्पन्नं वृत्तिमद्भूहिरण्यादियुक्तञ्च कृत्वा स्वधर्मोवर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितोभवद्भिरनुष्ठीयतामिति तान् ब्राह्मणान् ब्रूयात्। एवं नियुक्तैस्तैर्य्यत्कर्त्तव्यन्तदाह॥१८७॥

निजधर्म्माविरोधेन यस्तु सामयिकोभवेत्।
सोपि यत्नेन संरक्ष्योधर्म्मोराजकृतश्चयः॥१८८॥

श्रौतस्मार्त्तधर्म्मानुपमर्द्देन समयान्निष्पन्नोयोधर्म्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोपि यत्नेन पालनीयः। तथा राज्ञा च निजधर्म्माविरोधेनैव यः सामयिकोधर्म्मोयावत्पथिकभोजनन्देयमस्मद्रातिमण्डलन्तुरगादयोन प्रस्थापनीयाइत्येवं रूपः कृतः सोपि रक्षणीयः। एवं समयधर्म्मः परिपालनीयइत्युक्ता तदतिक्रमादौ दण्डमाह॥१८८॥

गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च यः। सर्व्वं स्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥ १८९ ॥

यः पुनर्गणस्य ग्रामादिजनसमूहस्य संबन्धिसाधारणद्रव्यमपहरति। सम्वित्समयस्तां समूहकृतां राजकृतां वा योलङ्घयेदतिक्रामेत्तदीयं सर्व्वं धनमपहृत्य स्वराष्ट्राद्विप्रवासयेन्निःकासयेत्। अयञ्च दण्डोऽनुबन्धाद्यतिशये द्रष्टव्यः। अनुबन्धाद्यल्पत्वेतु॥

योग्रामदेशसङ्घानां कृत्वा सत्येन सम्विदम्। विसम्वदेन्नरोलोभात्तं राष्ट्राद्विप्रवासयेत्। निगृह्य दापयेदेनं समयव्यभिचारिणम्। चतुःसुवर्णं षण्निष्कं शतमानञ्च राजतमिति मनुप्रतिपादितदण्डानां निर्व्वासनचतुःसुवर्णनिष्कशतमानानां चतुर्णामन्यतमोजातिशक्त्याद्यपेक्षया कल्पनीयः। इदस्मृतेः कर्तव्यमित्याह॥ १८६॥

कर्त्तव्यं वचनं सर्वैः समूहहितवादिनाम्।

गणिनां मध्ये ये समूहहितवदनशीलास्तद्वचनमितरैर्गणस्थैर्गतैरनुसरणीयम्। अन्यथा दण्डइत्याह॥ ० ॥

यस्तत्र विपरीतः स्यात्सदाप्यः प्रथमन्दमं ॥१९०॥

यस्तु गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी सराज्ञा प्रथमं साहसं दण्डनीयः। राज्ञा चेत्यङ्गणिषु प्रवर्त्त नीयइत्याह ॥१९०॥

समूहकार्य्यआयातान् कृतकार्य्यान्विसर्ज्जयेत्।
सदानमानसत्कारैः पूजयित्वा महीपतिः॥१९१॥

समूहकार्य्यनिर्वृत्यर्थं स्वपार्श्वं प्राप्तान् गणिनोनिर्वर्त्तिता त्मीयप्रयोजनान्। दानमानसत्कारैः स राजा परितोष्य विसर्ज्जयेत्। समूहदत्तापहारिणमत्याह ॥१९१॥

समूहकार्य्यप्रहितोयल्लभेत तदर्प्पयेत्। एका दशगुणन्दाप्योयद्यसौ नार्प्पयेत्स्वयम्॥१९२॥

समूहकार्य्यार्थं महाजनैः प्रेरितोराजपार्श्वे यद्वस्त्रहिरण्या दिकं लभते तदप्रार्थितएव महाजनेभ्योनिवेदयेत् अन्यथा तस्मादेकादशगुणन्दण्डन्दापनीयः॥ एवम्प्रकाराश्च कार्य्य चिन्तकाः कार्य्याइत्याह॥१९२॥

धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्य्यचिन्तकाः ।
कर्त्तव्यञ्च वचनन्तेषां समूहहितवादिनाम् ॥ १९३ ॥

श्रौतस्मार्त्तधर्म्मज्ञा बाह्याभ्यन्तरशौचयुक्ता अर्थेष्वलुब्धाः कार्य्यविचारकाः कर्तव्याः । तेषाञ्चवचनमितरैः कार्य्यमित्येतदादरार्थं पुनर्वचनम् । इदानीं संविदाम्प्रतिपादितन्धर्म्मं श्रेण्यादिष्वतिदिशन्नाह ॥ १९३ ॥

श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः ।
भेदञ्चैषां नृपो रक्षेत्पूर्व्ववृत्तिञ्च पालयेत् ॥ १९४ ॥

एकपण्यशिल्पोपजीविनः श्रेणयः । नैगमाः ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति । पाशुपतादयः । पाषण्डिनः ये वेदस्य प्रामाण्यमेव नेच्छन्ति । नग्नाः सौगतादयः । गणो व्रातः आयुधीयादीनामेककर्म्मोपजीविनाम् एषाञ्चतुर्व्विधानामप्ययमेव विधिर्य्यो निजधर्म्माविरोधेनेत्यादिना प्रतिपादितः । एतेषाञ्च श्रेण्यादीनाम्भेदन्धर्म्मव्यवस्थां नृपो रक्षेत् । पूर्व्वोपात्तां वृत्तिञ्च पालयेत् ॥ ० ॥ इति संविद्व्यतिक्रमप्रकरणम् ॥ ० ॥

सम्प्रति वेतनस्यानपाकर्म्माख्यं व्यवहारपदमभिधीयते । तत्स्वरूपन्नारदेनोक्तम् ॥

भृतानामवेतनस्योत्कोदानादानविधिक्रमः । वेतनस्यानपाकर्म्म तद्विवादपदं स्मृतमिति । अस्यार्थः । भृतानामवेतनस्य वक्ष्यमाणश्लोकैरुक्तोदानादानविधिक्रमोयश्च विवादपदे तद्वेतनस्यानपाकर्मेत्युच्यते । तत्र नियममाह ॥ १९४ ॥

गृहीतवेतनः कर्म्म त्यजन् द्विगुणमावहेत् ।
अगृहीते समन्दाप्योभृत्यैरक्ष्य उपस्करः ॥ १९५ ॥

गृहीतम्वेतनं येनासौ स्वाङ्गीकृतकर्म्मत्यजन्नकुर्व्वन् द्विगुणां भृतिं स्वामिने दद्यात् । यदा पुनरभ्युपगतकर्म्माऽगृहीते एव वेतने त्यजति तदा समं यावद्वेतनमभ्युपगतन्तावद्दाप्योन द्विगुणम् । यदाऽङ्गीकृताभृतिन्दत्वा बलात्कारयितव्यः ॥

कर्म्माकुर्व्वन्भृतिमुष्य कार्य्योदत्वा भृतिम्बलादिति नारद वचनात् । भृतिरपि तेनैवोक्ता ॥

भृताय वेतनं दद्यात्कर्म्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने वा कर्म्मणोयद्विनिश्चितमिति ॥

तैश्च भृत्यैरुपस्करउपकरणं लाङ्गलादीनाम्प्रग्रहयोक्त्रादिकं यथाशक्तिरक्षणीयमितरथाकृष्यादिभिष्यत्यनुपपत्तेः । भृतिमपरिच्छिद्य यः कर्म्मकारयति तम्प्रत्याह ॥ १९५ ॥

दाप्यस्तु दशमम्भागम्बाणिज्यं पशुशस्यतः।
अनिश्चित्य भृतिं यस्तु कारयेत्समहीक्षिता॥१९६॥

यस्तु स्वामी वणिक् गोमी चैत्रिकोवा परिच्छिन्नवेतनमेव भृत्यकर्म्म कारयति स तस्माद्वाणिज्यपशुशस्यलक्षणात्कर्म्मणो यल्लब्धन्तस्य दशमम्भागं भृत्याय महीक्षिता राज्ञा दापनीयः। अनाज्ञप्तकारिणमत्याह॥१९६॥

देशङ्कालञ्च योऽतीयाल्लाभं कुर्य्याच्चयोऽन्य था।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृते ऽधिके
॥१९७॥

यस्तु भृत्यः पण्यविक्रयाद्युचितन्देशङ्कालञ्च पण्यविक्रयाद्य कुर्व्वन् दर्पादिनोल्लंघयेत्तस्मिन्नेव वा देशे काले च लाभमन्यथाव्ययाद्यतिशयसाध्यतया हीनङ्करोति तस्मिन्भृतके भृतिदानम्प्रति स्वामिनश्छन्द इच्छा भवेद्यावदिच्छति तावद्दद्यात्। न पुनः सर्व्वामेव भृतिमित्यर्थः। यदा पुनर्देशकालाऽभिज्ञतयाधिकोलाभः कृतस्तदा पूर्व्वपरिच्छिन्नायाभृतेरधिकमपिधनं स्वामिना भृत्याय दातव्यम्। अनेकभृत्यसाध्य कर्म्मणि भृतिदानप्रकारमाह॥१९७॥

योयावत्कुरुते कर्म्म तावत्तस्य तु वेतनम्। उभयोरप्यसाध्यं चेत्साध्ये कुर्य्याद्यथाश्रुतम्॥१९८॥

यदा पुनरेकमेव कर्म्मनियतवेतनमुभाभ्यां क्रियमाणमुभयोरप्यसाध्यव्याध्याद्यभिभवादुभाभ्यां अपिशब्दाद्बहुभिरपि यदि न परिसमापितन्तदा योभृत्योयावत्कर्म्म करोति तस्मै तत्कृतकर्म्मानुसारेण मध्यस्थकल्पितं वेतनन्देयं न पुनःसमम्। न चावयवशः कर्म्मणि वेतनस्यापरिभाषितत्वात् अदानमिति मन्तव्यम्। साध्ये तु उभाभ्यां कर्म्मणि निर्व्वर्तिते यथाश्रुतं यावत्परिभाषितन्तावदुभाभ्यां देयं न पुनः प्रत्येकं कृत्स्नवेतनमपि कर्म्मानुरूपम्परिकल्प्य देयम्। आयुधीयभारवाहकौ प्रत्याह॥१९८॥

अराजदैविकन्नष्टम्भाण्डन्दाप्यस्तु वाहकः। प्रस्थानविघ्नकृच्चैव प्रदाप्योद्विगुणां भृतिम्॥१९९॥

न विद्यते राजदैविकं यस्य भाण्डस्य तत्तथोक्तम्। तद्यदि प्रमादहीनतया वाहकेन विनाशितन्तदा नाशानुसारेणासौ तद्भाण्डन्दापनीयः। तदाह नारदः॥

भाण्डव्यसनमागच्छेद्यदि वाहकदोषतः। दाप्योयत्तत्र नश्येत्तु दैवराजकृतादृतइति॥

यः पुनर्विवाहाद्यवसरे सञ्जनति वासरे प्रतिष्ठमानस्य तत्प्रस्थानौपयिकं कर्म्म प्रागङ्गीकृत्य तदानीं न करिष्यामीति प्रस्थानविघ्नमाचरति तदासौ द्विगुणां भृतिन्दाप्यः। अत्यन्तोत्कर्षहेतुकर्म्मनिरोधात्॥ १९९॥

किञ्च प्रक्रान्ते सप्तमम्भागञ्चतुर्थं पथि सन्त्यजन्।
भृतिमर्द्धपथे सर्व्वां प्रदाप्यस्त्याजकोपि च॥ २००॥

प्रक्रान्तेऽध्यवसिते प्रस्थाने स्वाङ्गीकृतङ्कर्म्म यस्त्यजत्यसौ भृतेः सप्तमम्भागं दाप्यः। नन्वत्रैव विषये·प्रस्थानविघ्नकृत्यादिना द्विगुणभृतिदानमुक्तमिदानीं सप्तमोभाग इति विरोधः। उच्यते। भृत्यन्तरोपादानावसरसम्भवे स्वाङ्गीकृतङ्कर्म्म स त्यजति तस्य सप्तमोभागः। यस्तु प्रस्थानलग्नसमय एव त्यजति तस्य द्विगुणभृतिदानमित्यविरोधः। यः पुनः पथि प्रक्रान्ते गमने वर्त्तमाने सति कर्म्म त्यजति स भृतेश्चतुर्थं भागं दाप्यः। अर्द्धपथे पुनः सर्व्वां भृतिं दापनीयः। यस्तु त्याजकः कर्म्मात्यजन्तन्त्याजयति स्वामी पूर्व्वोक्तप्रदेशेष्वसावपि पूर्व्वोक्तं सप्तमभागादिकं भृत्याय दापनीयः। एतच्चाव्याधितादिविषयम्॥

भृत्योनार्त्तो न कुर्य्याद्योदर्पात्कर्म्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयञ्चास्य वेतनमिति मनुवचनात्। यदा पुन

र्थाधाव्यपगतेऽस्मरितदिवसान्परिगणय्य पूरयति तदा लभत एव वेतनम्॥

आर्त्तस्तु कुर्य्यात्स्वस्थः सन्यथाभाषितमादितः। सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनमिति मनुस्मरणात्। यस्त्वपगतव्याधिः स्वस्थएवबालस्यादिना प्रारब्धकर्म्मान्येन करोति परेण वा न समापयति न तस्मै वेतनन्देयम्। यथाह मनुः॥

यथोक्तमार्तः स्वस्थोवा यस्तत्कर्म न कारयेत्। न तस्य वेतनन्देयमल्पोनास्यापि कर्मणइति॥ ०॥ इति वेतनादानप्रकरणम्॥ ०॥

अधुना द्यूतसमाह्वयाख्यं विवादपदमारभते। तत्स्वरूपन्नारदेनाभिहितम्॥

अक्षवध्रशलाकाद्यैर्देवनञ्जिह्मकारितम्। पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयं इति॥

अक्षाः पाशकाः। वध्रश्चर्मपट्टिका शलाकादन्तादिमयो दीर्घचतुरस्राः। आद्यग्रहणाच्चतुरङ्गादिक्रीडासाधनङ्करितुरगरथादिकं गृह्यते। तैरप्राणिभिर्य्यद्देवनं क्रीडा पणपूर्व्विका क्रियते। तथा वयोभिः पक्षिभिः। कुक्कुटपारावतादिभिः। च शब्दान्मल्लमेषमहिषादिभिश्च प्राणिभिर्य्या पणपूर्व्विका क्रीडा क्रियते। तदुभयं यथाक्रमं द्यूतसमाह्वयाख्यं विवादपदम्। द्यूतञ्च समाह्वयश्च द्यूतसमाह्वयम्। तदुक्तं मनुना॥

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः। तत्र द्यूतसभाधिकारिणो वृत्तिमाह ॥ २०० ॥

ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।
गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतम्॥ २०१॥

परस्परं सम्प्रतिपत्त्या कितवैः परिकल्पितः पणो ग्लह इत्युच्यते। तत्र ग्लहे तदाश्रया शतिका शतपरिमितादधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः। तस्माद्धूर्तकितवात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात्। पञ्च पणा आयो यस्मिन् शते तच्छतं पञ्चकन्तदस्मिन्वृद्ध्यायलाभेत्यादिना कन्। जितस्य ग्लहस्य विंशतितमम्भागं गृह्णीयादित्यर्थः। सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी सभापतिरुच्यते। इतरस्मात्पुनरपरिपूर्णशतिकवृद्धेः कितवाद्दशकं शतञ्जितद्रव्यस्य दशमम्भागं गृह्णीयादिति यावत् एवञ्च क्लृप्तवृत्तिना सभिकेन किङ्कर्तव्यमित्यत आह ॥ २०१ ॥

स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम्।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी॥ २०२॥

यएवं कृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्तकितवेभ्योरक्षित स्तस्मै राज्ञे यथा सम्प्रतिपन्नमंशन्दद्यात्। यथाजितं यत् द्रव्यन्तद्द्राहयेदन्यकयहणेनासेधादिना च पराजितसका शादुद्धरेदुद्धृत्य च तद्धनं जेत्रे अर्थिने सभिकोदद्यात्। तथा क्षमी भूत्वा सत्यञ्च वचोविश्वासार्थं द्यूतकारिणान्द द्यात्। तदुक्तन्नारदेन॥

सभिकः कारयेद्द्यूतन्देयन्दद्याच्च तत्कृतमिति॥

यदा पुनः सभिकोदापयितुन्न शक्नोति तदा राजा दापये दित्याह॥२०२॥

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले। जितं ससभिके स्थाने दापयेदन्यथा नतु॥२०३॥

प्रसिद्धेऽप्रच्छन्ने राजाध्यक्षसमन्विते ससभिके सभिकसहिते कितवसमाजे सभिकेन च राजभागे दत्ते राजा धूर्तकितवमवि प्रतिपन्नं जितम्पणन्दापयेत्। अन्यथा प्रच्छन्ने सभिकरहित अदत्तराजभागे द्यूते जितम्पणञ्जेत्रे न दापयेत्। जयपराजय विप्रतिपत्तौ निर्णयोपायमाह॥२०३॥

द्रष्टारोव्यवहाराणां साक्षिणश्च तएवच।

द्यूतव्यवहाराणां द्रष्टारः सभ्यास्तएव कितवाएव राज्ञा नियोक्तव्याः। न पुनः श्रुताध्ययनसम्पन्ना इत्यादि नियमोऽस्ति।

साक्षिणश्च द्यूते द्यूतकारा एव कार्य्याः। न तत्र स्त्रीबालवृद्ध कितवेत्यादिनिषेधोऽस्ति। क्वचित् द्यूतनिषेद्धुमाह ॥०॥

राज्ञा सचिह्नन्निर्व्वास्याः कूटाक्षोपधिदेविनः ॥२०४॥

कूटैरक्षादिभिरुपधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्व्वासयेत्। नारदेन निर्व्वासने विशेष उक्तः ॥

कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्। कण्ठेऽक्षमालामासज्य सह्येषां विनयः स्मृतइति ॥ यानि च मनुवचनानि द्यूतनिषेधपराणि ॥

द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा। तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ इत्यादीनि तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षरहितद्यूतविषयतया च योज्यानि ॥ २०४ ॥

किञ्च। द्यूतमेकमुखं कार्य्यन्तस्करज्ञानकारणात्।

यत्पूर्व्वोक्तं द्यूतन्तदेकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्य्यं। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः तस्कर

स्थानकारणात्। तस्करज्ञानरूपप्रयोजनान्तर्याच्च सभ्याः चौर्य्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेवमुक्तं कार्य्यं। द्यूतधर्मं समाह्वयेऽतिदिशन्नाह॥०॥

एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये॥२०५॥

ग्लहे शतिकवृद्धिरित्यादिना यो द्यूते धर्म उक्तः। स एव प्राणिद्यूते मल्लमेषमहिषादिनिर्व्वर्त्ये समाह्वयसंज्ञके ज्ञातव्यः। इति द्यूतसमाह्वयाख्यप्रकरणम्॥०॥

इदानीं वाक्पारुष्यं प्रस्तूयते। तल्लक्षणं नारदेनोक्तम्। देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यन्तदुच्यते इति। देशादीनामाक्रोशं न्यङ्गसंयुतम्। उच्चैर्भाषणमाक्रोशः। न्यङ्गमवद्यम्। तदुभययुक्तं यत्प्रतिकूलार्थमुद्वेगजननार्थं वाक्यन्तद्वाक्पारुष्यं कथ्यते। तत्र कलहप्रियाः खलु गौडा इति देशाक्रोशः। नितान्तं लोलुपाः खलु विप्रा इति जात्याक्रोशः। क्रूरचरितानन्तु वैश्वामित्रा इति कुलाक्षेपः। आदिग्रहणाद्विद्याशिल्पादिनिन्दया विदग्धच्छिन्नादिपुरुषाक्षेपो गृह्यते। तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणमनेनोक्तम्॥

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्। गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद्गुरुः। साक्षेपनिष्ठुरं ज्ञेयमश्लीलं न्यङ्ग

संयुतम्। पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणइति । तत्र धिङ्मूर्खं जाल्ममित्यादि साक्षेपं। अत्र न्यङ्गमित्यसभ्यमवद्य भगिन्यादिगमनम्। तद्युक्तमश्लीलम्। सुरापोसि इत्यादि महापातकाद्याक्रोशैर्युक्तं वचस्तीव्रम्। तत्र निष्ठुराक्रोशे सवर्ण विषये दण्डमाह ॥ २०५ ॥

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिनाम् ।
क्षेपङ्करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश ॥ २०६ ॥

न्यूनाङ्गाः करचरणादिविकलाः। न्यूनेन्द्रियाः नेत्रश्रोतादिरहिताः। रोगिनोदुश्चर्मप्रभृतयः। तेषां सत्येनासत्येनान्यथास्तोत्रेण च निन्दार्थतया स्तुत्या यत्र नेत्रयुगलहीनएषोन्धइत्युच्यते। तत्सत्यम्। यत्र पुनश्चक्षुष्मानेषोन्धइत्युच्यते। तदसत्यं। यत्र विकृताकृतिरेव दर्शनीयस्त्वमसीत्युच्यते। तदन्यथास्तोत्रम्। एवंविधैर्यः क्षेपम्भर्त्सनङ्करोत्यसावर्द्धाधिकत्रयोदशपणान् दण्डनीयः। काणञ्चाप्यथवाखञ्जमन्यम्वापि तथाविधम्॥ तथ्येनापि ब्रुवन्दाप्योदण्डङ्कार्षापणावरमिति यन्मनुवचनम्। तदतिदुर्वृत्तवर्णविषयम्। यदा पुनः पुत्रादयो काणादीन् शपन्ति तदा शतं दण्डनीयाइति तेनैवोक्तम्॥

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम्। आचारयन् शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति च। एतच्च सापराधेषु माचादिषु गुरुषु निरपराधायाञ्च जायायान्द्रष्टव्यम्। अश्लीलाक्षेपे दण्डमाह ॥ २०६ ॥

अभिगन्तास्मि भगिनीं मातरम्वा तवेति ह। शप न्तन्दापयेद्राजा पञ्चविंशतिकन्दमम् ॥ २०७ ॥

त्वदीयां भगिनीं मातरम्वा अभिगन्तास्मीति शपन्तम न्याम्वा त्वञ्जायामभिगन्तास्मीत्येवं शपन्तं राजा पञ्चविंशति कम्पणानां पञ्चाधिकाविंशतिर्यस्मिन्दण्डे स तथोक्तस्तन्दण्ड न्दापयेत्। एवं समानगुणेषु वर्णिषु दण्डमभिधाय विषम गुणेषु दण्डं प्रतिपादयितुमाह ॥ २०७ ॥

अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च।

अधमेष्वात्मापेक्षया न्यूनवृत्तादिगुणेष्वर्द्धो दण्डः। पूर्व्व वाक्ये पञ्चविंशतेः प्रकृतत्वात्तदपेक्षयार्द्धः सार्द्धद्वादशपणा त्मकोद्रष्टव्यः। परभार्य्यासु पुनर्विशेषेण द्विगुणः। पञ्चविंश त्यपेक्षयैव पञ्चाशत्पणात्मकोवेदितव्यः॥ तथोत्तमेषु च

क्षापेक्षयाधिकश्रुतवृत्तेषु दण्डः पञ्चाशत्पणात्मक एव। वर्णानां मूर्द्धावसिक्तादीनाञ्च परस्पराक्षेपे दण्डकल्पनामाह॥ ०॥

दण्डप्रणयनङ्कार्य्यम्वर्णजात्युत्तराधरैः॥२०८॥

वर्णा ब्राह्मणादयः। जातयो मूर्द्धावसिक्तादयः। वर्णाश्च जातयश्च वर्णजातयः। उत्तराश्चाधराश्च उत्तराधराः वर्णजातयश्च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैर्वर्णजात्युत्तराधरैः। परस्परमाक्षेपे क्रियमाणे दण्डस्य प्रणयनम्प्रकर्षेण नयनमूहनम्वेदितव्यम्। तच्च दण्डकल्पनं उत्तराधरैरिति विशेषोपादानात् उत्तराधरभावापेक्षयैव कर्त्तव्यमित्यवगम्यते यथा मूर्द्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टञ्चाक्रुश्य ब्राह्मणः क्षत्रियाक्षेपनिमित्तात्पञ्चाशत्पणदण्डात्किञ्चिदधिकम्पञ्चसप्तत्यात्मकं दण्डमर्हति। क्षत्रियोपि तमाक्रुश्य ब्राह्मणाक्षेपनिमित्ताच्छतदण्डादूनपञ्चसप्ततिमेव दण्डं। मूर्द्धावसिक्तोपि तावाक्रुश्य तमेव दण्डमर्हति। मूर्द्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः परस्पराक्रोशनिमित्तकौ यथाक्रमेण दण्डौ वेदितव्यौ। एवमन्यत्राप्यूहनीयम्। एवं सवर्णविषये दण्डमभिधाय वर्णानामेव प्रतिलोमाक्षेपे दण्डमाह॥ २०८॥

प्रातिलोम्यापवादेषु द्विगुणा त्रिगुणा दमाः।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः॥ २०९ ॥

अपवादा अधिक्षेपाः। प्रातिलोम्येनापवादाः प्रातिलोम्यापवादास्तेषु ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोर्यथाक्रमेण पूर्व्ववाक्याद्द्विगुणपदोपात्तपञ्चाशत्पणापेक्षया द्विगुणाः शतपणाः त्रिगुणाः सार्द्धशतपणाश्च दण्डा वेदितव्याः। शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाच्छेदनम्वा भवति। यथाह मनुः॥

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हतीति। विट्शूद्रयोरपि क्षत्रियादनन्तरैकान्तरयोस्तुल्यन्यायतया शतमध्यर्द्धशतम्वा यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम्। शूद्रस्य च वैश्याक्रोशे शतम्। आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणेनाक्रोशे कृते तस्माद्ब्राह्मणाक्रोशनिमित्तात्कृतपरिमिताद्दण्डात्प्रतिवर्णमर्द्धस्यार्द्धस्य हानिं कृत्वावशिष्टम्पञ्चाशत्पञ्चविंशत्यर्द्धद्वादशपणात्मकं यथाक्रमं ब्राह्मणो दण्डनीयः। तदुक्तं मनुना॥

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दम इति। क्षत्रियेण वैश्ये शूद्रे चाक्रुष्टे यथाक्रमम्पञ्चाशत्पञ्चविंशतिकौ दमौ वैश्यस्य च शूद्राक्रोशे पञ्चाशदित्यूहनीयम्। ब्राह्मणराजन्यवत्क्षत्रियवैश्ययोरिति

गौतमस्मरणात्। विट्शूद्रयोरेवमेव स्वजातिं प्रतित्यक्तदिति मनुस्मरणात्। पुनर्निष्ठुराक्षेपमधिकृत्याह ॥ २०६ ॥

बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः। शत्य स्तदर्द्धिकः पादनासाकर्णकरादिषु ॥ २१० ॥

बाह्वादीनां प्रत्येकं विनाशे वाचिके वाचा प्रतिपादिते तव बाहू छिनद्मीत्येवं रूपे शत्यः शतपरिमितो दण्डो वेदितव्यः। पादनासादिषु आदिग्रहणात्। स्फिगादिषु वाचिके विनाशे तदर्धिकस्तस्य शतस्यार्द्धं तदस्यास्तीति तदर्द्धिकः पञ्चाशत्प णिको दण्डो वेदितव्यः ॥ २१० ॥

किञ्च। अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश। तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २११ ॥

यः पुनर्ज्वरादिना क्षीणशक्तिस्तदा बाह्वाद्यङ्गभङ्गं करोमीत्येवं शपत्यसौ दशपणान्दण्डनीयः। यः पुनः समर्थः क्षीणशक्तिं पूर्वं वदाक्षिपत्यसौ पूर्वोक्तशतादिदण्डोत्तरकालन्तस्याशक्तस्य क्षेमार्थं प्रतिभुवन्दापनीयः। तीव्राक्रोशे दण्डमाह ॥ २११ ॥

पतनीयकृते चेपे दण्डोमध्यमसाहसः। उप
पातकयुक्ते तु दाप्यः प्रथमसाहसः॥ २१२॥

पातित्यहेतुभिर्ब्रह्महत्यादिभिर्वर्णनामाक्षेपे मध्यमसाहसो
दण्डः। उपपातकसम्बन्धे तु पुनर्गोघ्नस्त्वमसीत्येवमादिरूपे चेपे
प्रथमसाहसं दण्डनीयः॥ २१२॥

किञ्च। त्रैविद्यनृपदेवानां चेपउत्तमसाहसः।
मध्यमोजातिपूगानाम्प्रथमोग्रामदेशयोः॥ २१३॥

त्रैविद्याः वेदत्रयसम्पन्नाः। तेषां राज्ञान्देवानाञ्च चेपे
उत्तमसाहसोदण्डः। ये पुनर्ब्राह्मणमूर्द्धावसिक्तादिजातीना
म्पूगाः सङ्घास्तेषामाचेपे मध्यमसाहसोदण्डः। ग्रामदेशयोः
प्रत्येकमाचेपे प्रथमसाहसोदण्डोवेदितव्यः॥०॥ इति वाक्
पारुष्यं नामविवादप्रकरणम्॥०॥ दण्डपारुष्यं सम्प्रति
प्रस्तूयते। तत्स्वरूपञ्च नारदेनोक्तम्॥

परगात्रेष्वभिद्रोहोहस्तपादायुधादिभिः। भस्मादिभि
स्चोपघातोदण्डपारुष्यमुच्यतइति। परगात्रेषु स्थावर
जङ्गमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योभि
द्रोहोहिंसनं दुःखोत्पादनं तथा भस्मना आदिग्रहणाद्रजःपङ्क

पुरीषाद्यैश्च उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनमेतदुभ
यन्दण्डपारुष्यम्। दण्ड्यतेऽनेनेति दण्डो देहस्तेन यत्पारुष्यं
विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्डपारुष्यम्। तस्य चावगो
रणादिकरणभेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्य
रूपकर्मत्रैविध्यात्पुनस्त्रैविध्यं तेनैवोक्तम्॥

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात्। अवगोरण
निःशङ्कपातनक्षतदर्शनैः। हीनमध्योत्तमानान्तु द्रव्याणां समति
क्रमात्। त्रीण्येव साहसान्याहुः तत्र कण्टकशोधनमिति।
निःशङ्कपातनं निःशङ्कप्रहरणं त्रीण्येव साहसानि त्रिप्रकाराण्येव
सहसाकृतानि दण्डपारुष्याणीत्यर्थः। तथा वाग्दण्डपारुष्ययो
रुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न केवलं तस्य
दण्डाभावः। किन्तु पूज्य एव। तथा पूर्वं कलहप्रवृत्तस्य दण्ड
गुरुत्वम्। कलहे च बद्धवैरानुबन्धातुरेव दण्डभाक्त्वम्। तथा
द्वयोरपराधविशेषापरिज्ञाने दण्डः समः। तथा। श्वपचा
दिभिरार्याणामपराधे कृते सभ्या एव दण्डदानेऽधिकारिण
स्तेषामशक्यत्वे तान् राजा घातयेदेवनार्थं गृह्णीयादित्येवमन्यच्च
प्रकारा विधयस्तेनैवोक्ताः॥

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि॥ पारुष्ये सति संरम्भा
दुत्पन्ने क्रुद्धयोर्द्वयोः। समन्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते॥
पूर्वमाचारयेद्यस्तु नियतं स्यात्स दोषभाक्। पश्चाद्यः सोप्यस

न्कारी पूर्व्वेन्तु विनयो गुरुः ॥ द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः। स तयोर्द्दण्डमाप्नोति पूर्व्वो वा यदि वोत्तरः॥ पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः। विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ॥ श्वपाकषण्डचाण्डालव्यङ्गेषु वधवृत्तिषु। हस्तिपव्रात्यदासेषु गुर्व्वाचार्य्यनृपेषु च॥ मर्य्यादातिक्रमे सद्यो घात एवानुशासनम्। यमेव ह्यतिवर्त्तेरन्नेते सन्तं जनं नृषु॥ स एव विनयं कुर्य्यान्न तद्विनयभाङ्नृपः। मला ह्येते मनुष्याणां धनमेषाम्मलात्मकम्॥ अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेदिति। एवंभूतदण्डपारुष्यनिर्णयपूर्व्वकत्वाद्दण्डप्रणयनस्य तत्स्वरूपसन्देहे निर्णयहेतुमाह ॥ २१३ ॥

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च। द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्॥ २१४॥

यदा कश्चिद्रहस्यहमनेनाहत इति राज्ञे निवेदयति। तदा चिह्नैर्व्रणादिस्वरूपगतैर्लिङ्गैर्युक्त्या कारणप्रयोजनपर्य्यालोचनात्मिकया आगमेन जनप्रवादेन च शब्दाद्दिव्येन वा कूटचिह्नं कृतत्वसम्भावनाभयात्परीक्षा कार्य्या। एवं निश्चिते साधनविशेषेण दण्डविशेषमाह ॥ २१४ ॥

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः। अमेध्य पार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः॥ २१५॥ समेष्वेव परस्त्रीषु द्विगुणस्तूत्तमेषु च। हीनेष्वर्द्धदमो मोह मदादिभिरदण्डनम्॥ २१६॥

भस्मना पङ्केन रेणुना वा यः परं स्पर्शयत्यसौ दशपण दण्डन्दाप्यः। अमेध्यमिति अस्रुश्लेष्मनखकेशकर्णविट्दूषिका भुक्तोच्छिष्टादिकञ्च गृह्यते। पार्ष्णिः पादस्य पश्चिमो भागः। निष्ठ्यूतं मुखनिःसारितञ्जलम्। तैःस्पर्शने ततः पूर्व्वोक्तदशपणात् द्विगुणो दण्डो वेदितव्यः। पुरीषादिस्पर्शने पुनः कात्यायनेन विशेष उक्तः॥

छर्द्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः। षड्गुणः कायमध्ये स्यान्मूर्द्ध्नि त्वष्टगुणः स्मृत इति। आद्यग्रहणादस्थ्युक्तास्रमज्जा नो गृह्यन्ते। एवंभूत पूर्व्वोक्तदण्डः सवर्णविषये द्रष्टव्यः। पर भार्य्यासु चाविशेषेण तथोत्तमेषु स्वापेक्षया अधिकश्रुतवृत्तेषु पूर्व्वोक्ताद्दशपणाद्विंशतिपणाच्च दण्डाद्द्विगुणो दण्डो वेदितव्यः। हीनेषु स्वापेक्षया न्यूनश्रुतादिषु पूर्व्वोक्तस्यार्द्धदमः पञ्चपणो दशपणश्च वेदितव्यः। मोहश्चित्तवैकल्यम्। मदो मद्यपानजन्यो ऽवस्थाविशेषः। आदिग्रहणाद्ग्रहावेशादिकम्। एतैर्युक्तेन

भस्मादिस्पर्शने कृतेऽपि दण्डोन कर्त्तव्यः। प्रातिलोम्यापराधे दण्डमाह॥ २१६॥

विप्रपीडाकरञ्छेद्यमङ्गमब्राह्मणस्य तु। उद्गूर्णे प्रथमोदण्डः संस्पर्शे तु तदर्द्धिकः॥ २१७॥

ब्राह्मणानाम्पीडाकरमब्राह्मणस्य क्षत्रियादेर्यदङ्गङ्करच रणादिकन्तच्छेत्तव्यम्। क्षत्रियवैश्ययोरपि पीडाङ्कुर्वतः शूद्र स्याङ्गच्छेदनमेव॥

येन केनचिदङ्गेन हिंस्यात् श्रेयांसमन्त्यजः। छेत्तव्यन्तत्तदेवास्य तन्मनोरनुशासनमिति। द्विजातिमात्रस्यापराधे शूद्रस्याङ्गच्छेदनविधानात्। वैश्यस्यापि क्षत्रियापकारिणोऽयमेव दण्डस्तुल्यन्यायत्वात्। उद्गूर्णे वधार्थमुद्यते शस्त्रादिके प्रथमः साहसोवेदितव्यः। शूद्रस्य पुनरुद्गोरणेपि हस्तादिच्छेदनमेव। पाणिमुद्यम्य दण्डम्वा पाणिच्छेदनमर्हतीति मनुस्मरणात्। उद्गोरणार्थे शस्त्रादिस्पर्शने तु तदर्द्धिकः। प्रथमसाहसादर्द्धंदण्डोवेदिव्यः। भस्मादिस्पर्शे पुनः क्षत्रियवैश्ययोः प्रातिलोम्यापवादेषु द्विगुणत्रिगुणादमाः इति वाक्पारुष्योक्तन्यायेन कल्प्यम्। शूद्रस्य तत्रापि हस्तच्छेद एव। अवनिष्ठीवतोदर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः। एवं मूत्रयतोमेढ्रमवशर्द्धयतोगुदमिति मनुस्मरणात्। एवम्प्रातिलोम्यापराधदण्डमभिधाय पुनः सजातिमधिकृत्याह॥ २१७॥

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ। परस्परन्तु सर्व्वेषां शस्त्रे मध्यमसाहसम्॥ २१८॥

हस्ते पादे वा ताडनार्थमुद्गूर्णे यथाक्रमं दशपणोविंशतिपणश्च दण्डोवेदितव्यः। परस्परवधार्थं शस्त्रे उद्गूर्णे सर्व्वेषां वर्णानां मध्यमसाहसोदण्डः॥ २१८॥

किञ्च। पादकेशांशुककरोलुञ्चनेषु पणान् दश। पीडा कर्षांशुकावेष्टपादाध्यासे शतन्दमः॥ २१९॥

पादकेशवस्त्रकराणामन्यतमं गृहीत्वा उत्क्षिपति झटित्यादिकर्षति यस्तो दशपणं दण्ड्यः। पीडाच कर्षंश्चांशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासन्तस्मिन्समुचिते शतन्दण्ड्यः। एतदुक्तं भवति। अंशुकेनावेष्ट्य गाढमापीड्याकृष्य यः पादेन घट्टयति तं शतपणान्दापयेदिति॥ २२०॥

किञ्च शोणितेन विना दुःखं कुर्व्वन् काष्ठादिभिर्नरः। द्वात्रिंशतम्पणान्दण्ड्योद्विगुणान्दर्शने स्रजः॥ २२१॥

यः पुनः शोणितं यथा न दृश्यते तथा काष्ठलोष्टादिभिः करोत्यसौ द्वात्रिंशत्पणान्दण्ड्यः। यदा पुनर्यष्ट्यादिताडनेन शोणितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुःषष्टिपणान् दण्डनीयः। त्वङ्मांसास्थिभेदे पुनर्मनुना विशेषो दर्शितः। त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः। मांसभेत्ता तु षण्निष्कान् प्रवास्यस्त्वस्थिभेदक इति॥२२१॥

किञ्च। करपाददतोभङ्गे छेदने कर्णनासयोः।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा॥२२२॥

करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं छेदने रूढव्रणोद्भेदने मृतकल्पो यथा भवति तथा हते ताडिते मध्यमः साहसो विज्ञेयः। मनुष्यादिना विषयस्य शास्त्रमुत्पादनीयम्॥२२२॥

किञ्च। चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने।
कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः॥२२३॥

गमनभोजनभाषणनिरोधे नेत्रस्य आदिग्रहणाज्जिह्वायाः प्रतिभेदने। कन्धरा ग्रीवा बाहुः प्रसिद्धः। सक्थि ऊरुः। तेषां प्रत्येकभञ्जने मध्यमसाहसो दण्डः॥२२३॥

अपिच। एकं प्रताम्यतांनाञ्च यथोक्ताद्विगुणो दमः ॥०॥

यदा पुनर्बहवोमिलिता एकस्याङ्गभङ्गादिकङ्कुर्वन्ति तदा यस्मिन्नपराधे योदण्ड उक्तस्तस्मात् तस्माद्विगुणोदण्डः प्रत्येकन्दातव्यः। अतिक्रूरत्वात्तेषां प्रातिलोम्यानुलोम्यापराधयोरप्येतस्यैव सवर्णविषयेभिहितस्य दण्डजातस्य वाक्पारुष्योक्तक्रमेण हानिं वृद्धिञ्च कल्पयेत्॥

वाक्पारुष्ये यएवोक्ताः प्रातिलोम्यानुलोमतः। तएव दण्डपारुष्ये दाप्या राज्ञा यथाक्रममिति नारदस्मरणात्॥०॥

किञ्च। कलहापहृतन्देयन्दण्डश्च द्विगुणस्ततः ॥२२४॥

कलहे वर्त्तमाने यद्येनापहृतन्तत्तेन प्रत्यर्पणीयमपहृतद्रव्याद्विगुणश्चापहारनिमित्तोदण्डोदेयः॥२२४॥

किञ्च। दुःखमुत्पादयेद्यस्तु ससमुत्थानजव्ययम्। दाप्योदण्डञ्च योयस्मिन्कलहे समुदाहृतः ॥२२५॥

यश्च ताडनाद्दुःखमुत्पादयेत् तच्च व्रणरोपणादौषधार्थं पथ्यार्थञ्च योव्ययः क्रियते तन्दद्यात्। समुत्थानं व्रणरोपणं यस्मिन् कलहे यो दण्डस्तञ्च दद्याच्च समुत्थानजं व्ययमात्रं। परगात्राभिद्रोहे दण्डमुक्त्वानन्तरम्बहिरङ्गार्थनाशे दण्डमाह॥ २२५॥

अभिघाते तथा छेदे भेदे कुड्यावपातने।
पणान् दाप्यः पञ्चदशविंशतिन्तद्व्ययन्तथा॥ २२६॥

मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमम्पञ्चपणोदशपणोविंशतिपणश्च दण्डोवेदितव्यः। अवपातने पुनः कुड्यस्यैते त्रयोपि दण्डाः समुच्चिता ग्राह्याः पुनः कुड्यसम्पादनार्थञ्च धनं स्वामिने दद्यात्॥ २२६॥

अपिच। दुःखोत्पादिगृहे द्रव्यं क्षिपन्प्राणहरन्तथा। षोडशाद्यः पणान्दाप्योद्वितीयोमध्यमन्दमम्॥ २२७॥

परगृहे दुःखजनकं कण्टकादिद्रव्यम्प्रक्षिपन् षोडशपणान् दण्ड्यः। प्राणहरम्पुनर्विषभुजङ्गादिकम्प्रक्षिपन्मध्यमसाहसं दण्ड्यः। पश्वभिद्रोहे दण्डमाह॥ २२७॥

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा।
दण्डःक्षुद्रपशूनाञ्च द्विपणप्रभृतिक्रमात्॥२२८॥

क्षुद्राणाम्पशूनां अजाविकहरिणप्रायाणान्ताडनेन दुःखो त्पादनेऽसृक्स्रावणे शाखाङ्गच्छेदने शाखाशब्देन चात्र प्राणि सञ्चाररहितं शृङ्गादिकं लक्ष्यते। अङ्गानि करचरणप्रभृ तीनि शाखा चाङ्गञ्च शाखाङ्गं तस्य छेदने द्विपणप्रभृतिर्दण्डः। द्वौ पणौ यस्य दण्डस्य स द्विपणः द्विपणप्रभृतिरादिर्यस्य दण्ड गणस्यासौ द्विपणप्रभृतिः स च दण्डगणो द्विपणश्चतुःपणः षट् पणोऽष्टपणइत्येवं रूपोन पुनर्द्विपणस्त्रिपणश्चतुःपणः पञ्चपण इति। कथमिति चेदुच्यते। अपराधगुरुत्वात्तावत्प्रथमदण्डा द्गुरुतरमुपरितनं दण्डत्रितयमवगम्यते। तच्चाश्रुतत्रित्वादि सङ्ख्याश्रयणादरं श्रुतद्विसङ्ख्याया एवाभ्यासाश्रयणेन गुरुत्व सम्पादनमिति निरवद्यम्॥२२८॥

किञ्च। लिङ्गस्य च्छेदने मृत्यौ मध्यमोमूल्यमेव
च। महापशूनामेतेषु स्थानेषु द्विगुणोदमः॥२२९॥

तेषां क्षुद्रलिङ्गच्छेदने मारणे च मध्यमसाहसोदण्डः स्वामिने च मूल्यन्दद्यात्। महापशूनां पुनर्गोगजवाजिप्रभृती

मामेतेषु स्थानेषु ताडनलोहितस्रावणादिनिमित्तेषु पूर्वोक्ताद्दण्डाद्विगुणो दण्डो वेदितव्यः । स्थावराभिद्रोहे । दण्डमाह ॥ २२९ ॥

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥ २३० ॥

प्ररोहा अङ्कुरास्तद्वन्त्यः शाखाप्ररोहिण्यः याः छिन्नाः पुनरुप्ता अतिकाण्डमरोहन्ति ताः शाखा येषां वटादीनान्ते प्ररोहिशाखिनस्तेषां शाखाछेदने यतो मूलशाखा निर्गच्छन्ति तस्य स्कन्धस्य छेदने समूलवृक्षच्छेदने च यथाक्रमं विंशतिपणदण्डादारभ्य पूर्वस्मात्पूर्वस्मादुत्तरोत्तरदण्डो द्विगुणः । एतदुक्तं भवति । विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवं त्रयो दण्डा यथाक्रमं शाखाछेदनादिष्वपराधेषु भवन्तीति । अप्ररोहिशाखिनामप्युपजीव्यद्रुमाणामाम्रादीनां पूर्वोक्तेषु स्थानेषु पूर्वोक्त एव दण्डः । अनुपजीव्याप्ररोहिशाखिषु पुनरर्धेषु कल्प्यम् । वृक्षविशेषमत्याह ॥ २३० ॥

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेच विश्रुते ॥ २३१ ॥

चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्व्वोक्ता दण्डाद्द्विगुणः विंशतिपणादिको द्विगुणो दण्डः। गुल्मादीन् प्रत्याह ॥ २३१ ॥

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधां। पूर्व्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने ॥ २३२ ॥

गुल्मा अनतिदीर्घनिविडलता मालत्यादयः। गुच्छा अवल्लीरूपा जयरसप्रायाः कुरण्टकादयः। क्षुपाः करवीरादयः सरसप्रायाः। लता दीर्घयायिन्यो द्राक्षातिमुक्ताप्रभृतयः। प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः त्रिसरायायिन्यः सारिवाप्रभृतयः ओषध्यः फलपाकावसानाः शालिप्रभृतयः वीरुधश्छिन्ना अपि या विविधप्ररोहन्ति गुडूचीप्रभृतयः। एतेषु पूर्व्वोक्तेषु स्थानेषु कर्त्तने छेदने पूर्व्वोक्तदण्डादर्द्धदण्डो वेदितव्यः। इति दण्डपारुष्यप्रकरणम्॥ ०॥

अधुना साहसं नाम विवादपदं व्याचिख्यासुस्तल्लक्षणमाह ॥ २३२ ॥

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्।

सामान्यस्य साधारणस्य यथेष्टविनियोगानर्हत्वाविशेषेण परकीयस्य वा द्रव्यस्यापहरणं साहसं। कुतः प्रसभहरणात् प्रसह्याहरणाद्बलावष्टम्भेन हरणादिति यावत्। एतदुक्तं भवति। राजदण्डमाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिद्धरणमारणपरदारप्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम्। अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति। नारदेनापि साहसस्य स्वरूपम्विवृतम्॥

सहसा क्रियतेकर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते। तदिदं साहसञ्चौर्य्यवाग्दण्डपारुष्यस्त्रीसंग्रहेषु व्यासक्तमपि बलदर्प्पावष्टम्भोपाधितोभिद्यतइति दण्डातिरेकार्थं पृथगभिधानन्तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणन्तेनैव विवृतम्॥

तत्पुनस्त्रिविधं ज्ञेयम्प्रथमम्मध्यमन्तथा। उत्तमञ्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक्॥ फलमूलोदकादीनां क्षेत्रोपकरणस्य च। भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम्॥ वासःपश्वन्नपानानां गृहोपकरणस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृतं॥ व्यापादोविषशस्त्राद्यैः परदाराभिमर्शनम्। प्राणोपरोधियच्चान्यदुक्तमुत्तमसाहसम्॥ तस्य दण्डः क्रियाक्षेपः प्रथमस्य शतावरः। मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्च

शतावरः। उत्तमे साहसे दण्डः सहस्रावर इष्यते। वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने॥ तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे इति। वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः। तत्र परद्रव्यापहरणरूपे साहसे दण्डमाह ॥०॥

तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥ २३३ ॥

तस्यापहृतद्रव्यस्य मूल्याद्द्विगुणो दण्डः यः पुनः साहसं कृत्वा नाहमकार्षमिति निह्नुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति। एतस्मादेव विशेषदण्डविधानात्प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयं गम्यते। साहसिकस्य प्रयोजयितारमप्याह ॥ २३३ ॥

यः साहसङ्कारयति सदाप्योद्दिगुणन्दमम् ।
यश्चैवमुक्त्वाहन्दाता कारयेत्स चतुर्गुणम् ॥ २३४ ॥

यस्तु साहसं कुर्वित्येवमुक्त्वैव कारयत्यसौ साहसिकाद्द्विगुणन्दण्डं दाप्यः। यः पुनरहन्तुभ्यन्धनन्दास्यामि त्वङ्कुर्वित्येवमुक्त्वा साहसं कारयति स चतुर्गुणन्दण्डन्दाप्योऽनुबन्धातिशयात्। साहसविशेषमप्याह ॥ २३४ ॥

अर्घाक्षेपातिक्रमकृद्भ्रातृभार्य्याप्रहारकः ।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३५ ॥
सामन्तकुलिकादीनामपकारस्य कारकः । पञ्चा
शत्पणिकोदण्ड एषामिति विनिश्चयः ॥ २३६ ॥

अर्घस्यार्घार्हस्याचार्य्यादेराक्षेपमाज्ञातिक्रमञ्च यः करोति यश्च भ्रातृभार्य्यां ताडयति। तथा सन्दिष्टस्य प्रतिश्रुतस्यार्थस्याप्रदाता यस्तु मुद्रितं गृहमुद्घाटयति। तथा स्वगृहक्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनां कुलिकानां स्वकुलोद्भवानां आदिग्रहणात्स्वग्रामस्वदेशीयानाञ्च योऽपकर्त्ता ते सर्व्वे पञ्चाशत्पणपरिमितेन दण्डेन दण्डनीयाः ॥ २३६ ॥

किञ्च। स्वच्छन्दं विधवागामी विक्रुष्टेनाभिधावकः। अकारणेन विक्रोष्टा चण्डालश्चोत्तमं स्पृशन् ॥ २३७ ॥ शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः। अयुक्तं शपथं कुर्व्वन्न योग्योयोग्यकर्म्मकृत् ॥ २३८ ॥ वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकः। साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २३९ ॥ पितृपुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः। एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २४० ॥

नियोगम्बिना यः स्वेच्छया विधवां गच्छति। चौरादिभयाकुलैर्व्विक्रुष्टे यः शक्तोपि नाभिधावति ॥

यश्च वृथाक्रोशं करोति। यश्चण्डालो ब्राह्मणादीन् स्पृशति। यश्च शूद्रः प्रव्रजितान् दिगम्बरादीन् दैवे पित्र्ये च कर्म्मणि भोजयति। यश्चायुक्तं मातरं गमिष्यामीत्येवं शपथं करोति। यश्च अयोग्य एव शूद्रादिर्य्योग्यकर्म्माध्यापनादि करोति। वृषोवलीवर्दः क्षुद्रपशवोऽजादयस्तेषां पुंस्त्वस्य प्रजननशक्तेर्व्विनाशकः। वृषक्षुद्रपशूनामिति पाठे हिंस्रौषधप्रयोगेन वृक्षादेः फलप्रसूनाद्यापातयिता साधारणद्रव्यस्य वञ्चकः। दासीगर्भस्य पातयिता च। येवा पित्रादयोऽपतिता एव सन्तोऽन्योन्यन्त्यजन्ति ते सर्व्वे प्रत्येकम्पणशतन्दण्डार्हा भवन्ति। इति साहसप्रकरणम् ॥०॥ साहसप्रसङ्गात्तत्सदृशापराधेषु नेजकादीनान्दण्डमाह ॥ २४० ॥

वसानस्त्रीन्पणान्दण्ड्यो नेजकस्तु परांशुकम्।
विक्रयावक्रयाधानयाचितेषु पणान्दश ॥ २४१ ॥

नेजको वस्त्रस्य धावकः। स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदासौ पणत्रयन्दण्ड्यः। यः पुनस्तानि विक्रीणीते ऽवक्रयम्वा एतावत्कालमुपभोगार्थं वस्त्रन्दीयतमस्यमेतावद्धनन्देयमित्येवम्भाटकं योददाति आधित्वम्वा

भवति स तु रजको वा याचितं ददात्यसौ अल्पपराधन्त्रिपणा न्दण्डनीयः। तानि च वस्त्राणि श्लक्ष्णशाल्मलफलके क्षालनीयानि न पाषाणे न च व्यत्ययनीयानि। न च स्वगृहे वासयितव्यानि। इतरथा दण्ड्यः॥

शाल्मले फलके श्लक्ष्णे निज्याद्वासांसि नेजकः। न च वासांसि वासोभिर्निर्हरेन्न च वासयेदिति मनुस्मरणात्। यदा पुनस्तानि प्रमादान्नाशयति तदा नारदोक्तं द्रष्टव्यम्॥

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः। द्विःपादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्द्धमेव च। अर्द्धक्षयात्तु परतः पादांशापचयः क्रमात्। यावत्क्षीणदशञ्जीर्णं जीर्णस्यानियमः क्षय इति। अष्टपणक्रीतस्य सकृद्धौतवस्त्रस्य नाशितस्याऽष्टमभागोनम्पणन्यूनं मूल्यन्देयं। द्विर्धौतस्य तु पादोनम्पणद्वयोनं त्रिर्धौतस्य पणस्तृतीयांशन्यूनम्। चतुर्धौतस्यार्द्धं पणचतुष्टयन्देयम्। ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं पादापचयेन देयम्। यावत्क्षीणं जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम्॥ २४१॥

पितृपुत्रविरोधे तु साक्षिणान्त्रिपणो दमः। अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः॥ २४२॥

पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न पुनः कलहं निवारयत्यसौ पणत्रयन्दण्ड्यः। यश्च तयोः सपणे विवादे

पण्यदाने प्रतिभूर्भवत्यसौ चकारात्तयोर्यः कलहं वर्द्धयति सोपि विपणाद्दृष्टगुणस्त्वतुर्विंशतिपणान् दण्डनीयः । दम्पत्यादिष्वयमेव दण्डोनुसरणीयः ॥ २४२ ॥

तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः सदाप्योदण्डमुत्तमं ॥ २४३ ॥

तुला तोलनदण्डः । शासनं पूर्व्वोक्तम् । मानम्प्रस्थद्रोणादि । नाणकं मुद्राचिह्नितम् द्रव्यं निष्कादि । एतेषां यःकूटकृद्देश प्रसिद्धपरिमाणादन्यथान्यूनत्वमाधिक्यम्वा द्रव्यादेरव्यावहारिकमुद्रितत्वन्ताम्रादिगर्भत्वम्वा करोति । यश्च तैः कूटैर्जानन्नपि व्यवहरति तावुभौ प्रत्येकमुत्तमसाहसन्दण्डनीयौ । नाणकपरीक्षिणमत्याह ॥ २४३ ॥

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् । सनाणकपरीक्षी तु दाप्यउत्तमसाहसम् ॥ २४४ ॥

यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रव्यादिकं सम्यगिति ब्रूते सम्यक् च कूटमिति असावुत्तमसाहसन्दण्ड्यः । चिकित्सकमत्याह ॥ २४४ ॥

भिषग्मिथ्याचरन् दाप्यस्तिर्य्यक्षु प्रथमन्दमम्।
मानुषे मध्यमं राजमानुषेषूत्तमन्दमम्॥ २४५॥

यः पुनर्भिषग्मिथ्याचर्व्वेदानभिज्ञ एव जीवनार्थं चिकित्सा भिज्ञोऽहमिति तिर्य्यङ्मनुष्यराजपुरुषेषु चिकित्सामाचरत्यसौ क्रमेण प्रथममध्यमोत्तमसाहसान् दण्डनीयस्तत्रापि तिर्य्यगादिषु मूल्यविशेषेण वर्णविशेषेण राजप्रत्यासत्तिविशेषेण दण्डस्य गुरुलघुभावः कल्पनीयः॥ २४५॥

अवन्ध्यं यश्च बध्नाति वन्ध्यं यश्च प्रमुञ्चति।
अप्राप्तव्यवहारञ्च सदाप्योदण्डमुत्तमम्॥ २४६॥

यःपुनर्दण्डानर्हमनपराधिनं राजाज्ञया विना बध्नाति। यश्च बन्ध्यं व्यवहाराक्षय तमनिवृत्तव्यवहारश्चोन्मुञ्चत्यसा वुत्तमसाहसन्दाप्यः॥ २४६॥

मानेन तुलया वापि योंऽशमष्टमकं हरेत्। दण्डं
स दाप्योद्विशतम्बृद्धौ हानौ च कल्पितम्॥ २४७॥

यः पुनर्वणिग्व्रीहिकार्पासादेः पण्यस्याष्टममंशं कूटमानेन कूटतुलया वान्यथापहरत्यऽसौ पणानां द्विशतन्दण्डनीयः।

अपहृतस्य पुनर्द्रव्यस्य वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये॥ २४७॥

भेषजस्नेहलवणगन्धधान्यगुडादिषु। पण्येषु प्रक्षिपन् हीनमपणान्दाप्यस्तु षोडश॥२४८॥

भेषजमौषधद्रव्यं स्नेहो घृतादिः। गन्धद्रव्यमुशीरादि आदिशब्दाद्धिङ्गुमरीचादि। एतेष्वसारद्रव्यम्विक्रयार्थं मिश्र यतः षोडशपणो दण्डः॥२४८॥

किञ्च। मृच्चर्म्ममणिसूत्रायःकाष्ठवल्कलवाससाम्। अजातौ जातिकरणे विक्रेयाष्टगुणो दमः॥२४९॥

न विद्यते बहुमूल्याजातिर्यस्मिन्मृचर्मादिके तदजाति तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसञ्चारणेन बहुमूल्यजातीयसादृश्यसम्पादनेयथामल्लिकामोदसञ्चारणेन मृत्तिकायां सुगन्धामलकमिति। मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्म्मेति स्फटिकमणौ वर्णान्तरकरणेन पद्मरागइति कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति

कार्ष्णायसे वर्णोत्कर्षाधानेन रजतमिति विक्रयाद्रे चन्द्‌ नामोद्‌यद्वारेण चन्दनमिति कट्टोले लगाख्यं लवङ्गमिति कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति विक्रयस्था पादितस्य द्रव्यस्य मूल्यमारेः पण्यस्याष्टगुणोदण्डोवेदितव्यः ॥ २४९ ॥

समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम् ।
आधानम्विक्रयम्वापि नयतोदण्डकल्पना ॥ २५० ॥
भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते । द्विपणे द्विशतोदण्डोमूल्यवृद्धौ च वृद्धिमान् ॥ २५१ ॥

मुद्गपिधानं मुद्गेन यद्दवर्त्तनइति समुद्गकरण्डकम् । परिवर्त्तनम्व्यत्यासः । योन्यदेवमुक्तानां पूर्ण करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेवस्फटिकानां पूर्णकरण्डकं समर्पयति यश्च सारं भाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधिम्वा नयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या। कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने न्यूनपणमूल्यमिति । यावत्त स्मिन् कृत्रिमे विक्रीयते पञ्चाशत्पणोदण्डः पणमूल्ये पुनः शतं द्विपणमूल्ये द्विशतोदण्डः इत्येवं मूल्यवृद्धौ दण्डवृद्धिरुन्नेया। वणिजः प्रत्याह ॥ २५१ ॥

सम्भूय कुर्व्वतामर्घं सबाधं कारुशिल्पिनाम्।
अर्घस्य ह्रासं वृद्धिम्वा जानतां दम उत्तमः॥२५२॥

राजनिरूपितार्घस्य ह्रासं वृद्धिम्वा जानतोपि वणिजः सम्भूय मिलिता कारूणां रजकादीनां शिल्पिनाञ्चित्रकारादीनां सबाधं पीडाकरमर्घान्तरं लाभलोभात्कुर्व्वन्तः पण सहस्रं दण्डनीयाः॥२५२॥

किञ्च। सम्भूय वणिजाम्पण्यमनर्घेणोपरुन्धताम्।
विक्रीणताम्वा विहितो दण्ड उत्तमसाहसः॥२५३॥

ये पुनर्व्वणिजो मिलिता देशान्तरादागतम्पण्यमनर्घेण हीन मूल्येन प्रार्थयमाना उपरुन्धन्ति महार्घेण वा विक्रीणीते तेषामुत्तमसाहसो विहितो दण्डो मन्वादिभिः। केन पुनरर्घेण पणितव्यमित्याह॥२५३॥

राजनि स्थाप्यते योर्घ्यः प्रत्यहन्तेन विक्रयः।
क्रयो वा निस्रवस्तस्माद्वणिजां लाभकृत्स्मृतः॥२५४॥

राजनि सन्निहिते सति यस्तेनार्घ्यः स्थाप्यते निरूप्यते तेनार्घ्येण प्रतिदिनं क्रयो विक्रयो वा कार्य्यः। निर्गतः स्रवो निस्रवो

वर्गेषस्वाप्तजनिरूपितार्घो गिसवः सएव वणिजां लाभ कारी न पुनः स्वच्छन्दपरिकल्पितात्। मनुनाप्यर्घकरणे विशेषो दर्शितः। पञ्चराचे पञ्चराचे पक्षे मासे तथागते। कुर्वीत चैषामत्यर्घमर्घसंस्थापनं नृपइति ॥ २५४ ॥

किञ्च। स्वदेशपण्येच शतम्बणिक् गृह्णीत पञ्चकं।
दशकम्पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २५५ ॥

स्वदेशप्राप्तपण्यं गृहीत्वा योविक्रीणीते ऽसौ पञ्चकं शतम् पणशतपण्यपञ्चकं लाभं गृह्णीयात्। परदेशप्राप्ते पुनः पण्ये शत पणमूल्ये दशपणान् लाभं गृह्णीयात्। यस्य पण्यग्रहणदिवस एव विक्रयः सम्पद्यते। यः पुनः कालान्तरेपि विक्रीणीते तस्य कालोत्कर्षवशात् लाभोत्कर्षः कल्प्यः। एवञ्च यथार्घे निरूपिते पणशतेपञ्चपणोलाभोभवति तथैवार्घे राज्ञा स्वदेशपण्यविषये स्थापनीयः। परदेशपण्ये अर्घनिरूपणप्रकारमाह ॥ २५५ ॥

पण्यस्योपरि संस्थाप्य व्ययम्पण्यसमुद्भवम्।
अर्घोनुग्रहकृत्कार्य्यः क्रेतुर्विक्रेतुरेवच ॥ २५६ ॥

देशान्तरादागते पण्ये देशान्तरगमनप्रत्यागमनभाण्ड ग्रहणशुल्कादिस्थानेषु यावानुपयुक्तोर्थस्तावन्तमर्घं परिगणय्य

ल्पमूल्येन बहु मेयमित्वा यथापचयमतेऽद्रव्यव्यवसायः पलाय्यते तथा क्रेतृविक्रेत्रोरनुग्रहकार्य्यौ धौ राज्ञा स्थापनीयः। प्रासङ्गिकं परिसमाप्याधुना विक्रीयासम्प्रदानं प्रक्रमते। तत्स्वरूपं नारदेनाभिहितम्॥

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते। विक्रीयासम्प्रदानं तद्विवादपदमुच्यते॥ तत्र विक्रेयद्रव्यस्य चराचरभेदेन द्वैविध्यमभिधाय पुनःषड्विधत्वं तेनैव प्रत्यपादि॥

लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः॥ गणिमं तुलिमं मेयं क्रियया रूपतः श्रियेति क्रमुकफलादि तुलिमं कुङ्कुमादि मेयं शाल्यादि क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि। रूपतः पण्याङ्गनादि श्रिया दीप्त्या मरकतपद्मरागादि। इत्येतत् षट्प्रकारमपि पण्यं विक्रीयासम्प्रयच्छतो दण्डमाह॥ २५६॥

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति। सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ २५७॥

गृहीतं मूल्यं यस्य पण्यस्य विक्रेत्रा तद्गृहीतमूल्यं पण्यं यदि विक्रेता प्रार्थ्यमानाय स्वदेशवणिजे क्रेत्रे न समर्प्पयति।

तत्र पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरेऽल्पमूल्येन लभ्यते तदार्घह्रासकृतोऽपचय उदयो वृद्धिः पण्यस्य स्थावरजङ्गमात्मकस्य तेन सहितम्पण्यं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावदेव यतो मूल्यस्य तत्पण्यमिति प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीयमाणस्य यो लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादि प्रतिपादितवृद्धिरूपोदयेन वा सहितं क्रेत्रेवाऽस्माद्बलाद्दापनीयः। यथाह नारदः॥

अर्घश्चेदवहीयेत सोदयम्पण्यमावहेत्। स्थानिनामेष नियमो दिग्लाभन्दिग्विचारिणामिति। यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा तस्मिन्पण्ये वस्त्रगृहादिके च उपभोगः तदाच्छादनसुखनिवासादिरूपो विक्रेतुस्तत्सहितम्पण्यमसौ दाप्यः। यथाह नारदः॥

विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलमिति। विक्रेतुरुपभोगक्षय उच्यते। क्रेतुः सम्बन्धित्वेन क्षीयमाणत्वान्न पुनः कुड्यपातगृहघातादिरूपः। नष्टे तु। उपहन्येत वा पण्यं दह्येतापह्रियेत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छत इत्यनेनोक्तत्वात्। यदा त्वसौ क्रेता देशान्तरात्पण्यग्रहणार्थमागतस्तदा तत्पण्यमादाय देशान्तरे विक्रीणानस्य यो लाभस्तेन सहितम्पण्यं विक्रेता

क्रये दापयितव्यः। अयञ्च क्रीतपण्यसमर्पणनियमोऽनुशया भावे द्रष्टव्यः। सति त्वनुशये क्रीत्वा विक्रीय वा किञ्चिदित्यादि मनूक्तम्वेदितव्यम्॥ २५७॥

किञ्च। विक्रीतमपि विक्रेयम्पूर्व्वक्रेतर्य्यगृह्णति।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्॥२५८॥

यदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति तदा विक्रीतमपि पण्यं अन्यत्र विक्रेयं। यदा पुन र्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राजदैविकेनोपहतन्तदा क्रेतुरेवासौ हानि र्भवेत्। पण्याग्रहणरूपेण क्रेतृदोषेण नाशितत्वात्॥ २५८॥

अपिच। राजदैवोपघातेन पण्ये दोषमुपागते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः॥२५९॥

यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यम्विक्रेता न समर्प्पयति अजातानुशयोपि तच्च राजदैविकेनोपहतम्भवति तदासौ हानिर्विक्रेतुरेवातोन्यद्दुष्टम्पण्यम्विनष्टञ्च क्रेत्रे देयम्॥ २५९॥

किञ्च। अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्ट
मयदि। विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो
भवेत्॥ २६०॥

यः पुनर्विनैवानुशयमेकस्य हस्ते विक्रीतम्पुनरन्यस्य हस्ते
विक्रीणीते सदोषम्वा पण्यम्प्रच्छादितदोषं विक्रीणीते तदा
तत्पण्यमूल्यात् द्विगुणो दमोवेदितव्यः। नारदेनात्र विशेषो
दर्शितः॥

अन्यहस्ते तु विक्रीय योन्यस्मै तत्प्रयच्छति। द्रव्यन्तद्द्विगुण
न्दाप्योविनयन्तावदेव तु॥ निर्दोषं दर्शयित्वा तु सदोषं यः
प्रयच्छति। समूल्याद्द्विगुणन्दाप्योविनयन्तावदेवतु इति।
सर्व्वस्यायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः। अदत्तमूल्ये पुनः पण्ये
वाङ्मात्रक्रये क्रेतृविक्रेत्रोर्नियमकारिणः समयादृते प्रवृत्तौ
निवृत्तौ वा न कश्चिद्दोषः। यथाह नारदः॥

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः। अदत्तेन्यत्र
समयान्न विक्रेतुरविक्रयइति। विक्रयानुशयोभिहितः क्रीतानु
शयस्वरूपन्तु प्राक् प्रपञ्चितमधुना तदुभयसाधारणन्धर्म्म
माह॥ २६०॥

क्षयं वृद्धिञ्च वणिजा पण्यानामविजानता।
क्रीत्वा नानुशयः कार्य्यः कुर्व्वन् षड्भागदण्डभाक्
॥ २६१॥

परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाण मर्घहानिं वृद्धिमपश्यता क्रेत्रानुशयो न कार्य्यः। विक्रेत्रा च महार्घनिबन्धनमर्घक्षयमपश्यतानाऽनुशयितव्यम्। वृद्धिक्षय परिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो भवतीति व्यतिरेकादुक्तं भवतीति व्यतिरेकादुक्तम्भवति। अनुशयकालावधिश्च नारदेनोक्तः॥

क्रीत्वा मूल्येन यः पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रति देयन्तत्तस्मिन्नेवाह्न्यविक्षतम्॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत्। द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति। अपरीक्षितक्रयविक्रये पुनः पण्यत्रैगुण्यनिबन्धनानुशयावधिर्दशैकपञ्चसप्ताहेत्यादिना दर्शित एव। तदनया वाचोयुक्त्या वृद्धिक्षयपरिज्ञानस्यानुशयकारणत्वमवगम्यते। यथा पण्यपरीक्षाविधिबलात्। पण्यदोषाणां अतः पण्यदोषे तद्वृद्धिक्षय कारणत्रितयाभावेनुशयकालाभ्यन्तरेपि यद्यनुशयङ्करोति तदा पणषट्कागान्दण्डनीयः। अनुशयकारणसद्भावेप्यनुशयकालातिक्रमेणानुशयं कुर्व्वतोप्ययमेव दण्डः। उपभोगेनाविनश्वरेषु स्थिरार्थेष्वनुशयकालातिक्रमेणानुशयं कुर्व्वतो मनूक्तो दण्डो द्रष्टव्यः॥

परेणतु दशाहस्य न दद्यान्नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति॥०॥ इति विक्रीया

सम्भूय समुत्थानं नामप्रकरणम् ॥ ० ॥ सम्भूय समुत्थानं नाम विवाद पदमिदानीमभिदधाति ॥ २६१ ॥

समवायेन वणिजां लाभार्थङ्कर्म्म कुर्व्वताम्।
लाभालाभौ यथाद्रव्यं यथावा संविदा कृतौ
॥ २६२ ॥

सर्व्वे वयमिदं कर्म्म मिलिताः कुर्म्म इत्येवं कृपा संप्रति पत्तिः समवायस्तेन ये वणिक्नटनर्त्तकप्रभृतयो लाभलिप्सवो भूत्वा प्रातिस्विककर्म्मकुर्व्वते तेषां लाभालाभावुपचयापचयौ यथाद्रव्यं येन यावद्धनमुपचयार्थं दत्तन्तदनुसारेणाव वेयौ। यद्वा। प्रधानगुणभावपर्य्यालोचनया ममाद्धभागस्तस्य त्रिभाग इत्येवं कृपया संविदा समयेन यथा सम्प्रतिपन्नौ तथावेदितव्यौ। किञ्च ॥ २६२ ॥

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्।
स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक्॥ २६३ ॥

तेषां सम्भूय प्रचरतामध्ये यत्नमिदमित्थम व्यवहर्त्तव्य मिति प्रतिषिद्धमाचरतायन्नाशितं मनादिष्टमननुज्ञातमा

कुर्व्वाणेन तथा प्रमादात्प्रमाद्दीनतया वा येन यन्नाश्रितं स्व तत्पण्यं वणिग्भ्योदद्यात्। यः पुनस्तेषाम्मध्ये चौरराजादिजनिताद्व्यसनात्पण्यं पालयति स तस्माद्रक्षितात्पण्याद्दशमममंशं लभते॥ २६३॥

अर्घप्रक्षेपणाद्विंशम्भागं शुल्कं नृपोहरेत्।
व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत्
॥ २६४॥

इह यतः पण्यस्य यन्मूल्य मित्यर्घस्तस्य प्रक्षेपणाद्राजनिक्षपणाद्धेतोरसौ मूल्याद्विंशतितममंशं शुल्कार्थं गृह्णीयात्। यत्पुनर्व्यासिद्धमन्यत्र न विक्रेयमिति राज्ञा प्रतिषिद्धं यच्च राजयोग्यं माणिक्याद्यप्रतिषिद्धमपि तद्राज्ञे अनिवेद्य लाभलोभेन विक्रीतञ्चेद्राजगामिमूल्यदाननिरपेक्षन्तत्सर्वं पण्यं राजापहरेदित्यर्थः॥ २६४॥

मिथ्यावदन्परीमाणं शुल्कस्थानादपासरन्।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी॥ २६५॥

यः पुनर्वणिक्छुल्कवञ्चनार्थं परीमाणन्निकुते शुल्कग्रहणस्थानादापसरति यश्चास्येदमस्य वेत्येवम्विवादास्पदीभूतम्पण्यं

क्रीणाति विक्रीणीते वा तं सर्व्वे पणाष्टगुणन्दण्डनीयाः । अपि च ॥ २६५ ॥

तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६६ ॥

शुल्कं हि द्विविधं स्थलजं जलजञ्च । तत्र स्थलजमर्घप्रक्षेपणाद्विंशभागं शुल्कं नृपो हरेदित्युक्तम् । जलजन्तु मानवेऽभिहितम् ॥

पणं यानान्तरे दाप्यः पुरुषोऽर्द्धपणान्तरे । पादम्पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः । रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदा इति । शुल्कद्वयेप्ययमपरो विशेषः ॥

न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्ष्यलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञ इति । तीर्य्यतेऽनेनेति तरो नावादिस्तज्जन्यशुल्केऽधिकृतस्तरिकः । स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा दशपणान्दण्डनीयः । वेश्मो वेश्म प्रतिवेश्म इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते । तत्र भवाः प्रातिवेश्याः ब्राह्मणाश्च ते प्रातिवेश्याश्च ब्राह्मणप्रातिवेश्यास्तेषां श्रुतवृत्तसम्पन्नानां श्राद्धादिषु विभवे सत्यनिमन्त्रणे

हृतवत्तराद्। यथाविभवदाथादत्तमवपिक्षितमात:। राजा तदात्मयात्कुर्य्यादेवमधर्म्मेण दीयत इति ॥ २६७ ॥

किञ्च। जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।

जिह्मोपचयकले निर्लाभविगतलाभं लाभमाच्छिद्य त्यजेयुर्वहि:कुर्युः यत्र सम्भूयकारिणां मध्ये भाण्डप्रत्यवेक्षणादिकर्त्तुमसमर्थोऽसावन्येन स्वकर्म्मभाण्डमारवाहनतदायव्ययपरीक्षणादिकं कारयेत्। प्रागुपदिष्टवणिग्धर्म्मस्त्वलिङ्गादिष्वतिदिष्टमिति ॥ ० ॥

अनेन विधिराख्यात ऋत्विक्कर्षककर्म्मिणाम् ॥ २६८ ॥

अनेन लाभालाभौ यथाद्रव्यमित्यादिवणिग्धर्म्मकथनेन ऋत्विजां होत्रादीनां कृषीवलानामनटनर्त्तकतक्षादीनाञ्च शिल्पि कर्म्मोपजीविनां विधिर्वर्त्तनप्रकार आख्यातस्तत्र पश्चिमाध्यय विभागे विशेषो मनुना दर्शितः ॥

सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिन इति। अस्यायमर्थः। ज्योतिष्टोमेन

शतेन हीष्यन्तीति वचने गवां शतमृत्विगानतिरूपे दक्षिणा कार्य्ये विनियुक्तमृत्विजश्च होत्रादयः षोडश। तत्र कस्य किया नंश इत्यपेक्षायामिदमुच्यते॥

सर्व्वेषां होत्रादीनां षोडशर्त्विजां मध्ये ये मुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारस्ते गोशतस्यार्द्धिनः सर्वेषाम्भागपरिपूरणोपपत्तिवशात् याताष्टचत्वारिंशद्रूपार्द्धनार्द्धभाजः। अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छन्दसि प्रस्तोतारस्तदर्द्धेन तस्य मुख्यांशस्यार्द्धेन चतुर्व्विंशतिरूपेणार्द्धभाजः। ये पुनस्तृतीयिनोऽच्छावाकनेष्टाग्नीध्रप्रतिहर्तारस्ते तृतीयिनो मुख्यांशस्य षोडशगोरूपतृतीयांशेन तृतीयांशभाजः। येतु पादिनो यावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्ते मुख्यभागस्य यस्तुर्य्यांशोद्वादशगोरूपस्तद्भाजः। ननु कथमयमंशनियमोघटते। न तावदत्र समयोनापि द्रव्यसमुदायोनापि वचनं यद्वशाद्भागनियमः स्यादतः समं स्यादश्रुतत्वादिति न्यायेन सर्व्वेषां समांशभाक्त्वं कर्मानुरूपेण चांशभाक्त्वमिति युक्तम्। तत्रोच्यते। ज्योतिष्टोमप्रकृतिके द्वादशाहे अर्द्धिनस्तृतीयिनः पादिन इति सिद्धवदनुवादोन घटते। यदि तत्प्रकृतिभूते ज्योतिष्टोमेऽर्द्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनान्नस्यादतो वैदिकार्द्धिप्रभृतिसमाख्याबलात्प्रागुक्तांशनियमप्रकल्प्यत इति निरवद्यम् इति सम्भूय समुत्थानप्रकरणम्॥ ०॥ इदानीं स्तेयप्रस्तूयते। तल्लक्षणञ्च मनुनाभिहितम्॥

साहसं त्वन्वयवत्प्रसभङ्कर्म यत्कृतम्। निरन्वयम्भवेत् स्तेयं हृत्वापह्नुयते च यदिति। अन्वयवद्द्रव्यरक्षिराजाध्यक्षादिसमक्षं प्रसभम्बलावष्टम्भेन यत्परधनहरणादिकं क्रियते तत्साहसं स्तेयन्तु तद्विलक्षणं निरन्वयन्द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधनहरणन्तदुच्यते। यच्च सान्वयमपि हृत्वा न मयेदं हृतमिति भयान्निह्नुते तदपि स्तेयम्। नारदेनाप्युक्तम्॥

उपायैर्विविधैरेषां छलयित्वापकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणइति। तत्र तस्करग्रहणपूर्व्वकत्वाद्दण्डस्य ग्रहणस्य च ज्ञानपूर्व्वकत्वात् ज्ञानोपायन्तावदाह॥ २६८॥

ग्राहकैर्गृह्यते चौरोलोप्त्रेणाथ पदेन वा। पूर्व्वकर्मापराधीच तथा चाशुद्धवासकः॥ २६९॥

यश्चौरोयमिति जनैर्विख्याप्यतेऽसौ ग्राहकैराजपुरुषस्थानपालप्रभृतिभिर्ग्रहीतव्यः। लोप्त्रेणापहृतभाजनादिना वा चौर्य्यचिह्नेन नाम्रद्दिवसादारभ्य चौरपदानुसरणेन वा ग्राह्यः। यश्च पूर्व्वकर्मापराधी प्राक्प्रख्यातचौर्य्यः अशुद्धोऽप्रज्ञातोवासः स्थानं यस्यासावशुद्धवासकः। सोपिग्राह्यः॥ २७०॥

किञ्च। अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २७० ॥ परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २७१ ॥

न केवलं पूर्वोक्ता ग्राह्याः किन्त्वन्येपि वक्ष्यमाणलिङ्गैः शङ्कया ग्राह्याः। जातिनिह्नवेन नाहं शूद्र इत्येवं रूपेण नाम निह्नवेन नाहण्डवित्थ इत्येवं रूपेण। आदिग्रहणात्स्वदेशग्राम कुलाद्यपलापेन च लक्षिताः ग्राह्याः द्यूतपण्याङ्गनामद्यपाना दिव्यसनेष्वतिप्रसक्तास्तथा कुतस्त्योसि त्वमिति चौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति तर्ह्यसावपि ग्राह्यः। बहुवचनात्स्विन्नललाटादीनां ग्रहणम्। तथा ये निष्कारणं कियदस्य धनं किम्वास्य गृहमित्येवं पृच्छन्ति वेशान्तरधारणे नात्मानं गूहयित्वा ये चरन्ति ये चायाभावेपि बहुव्यय कारिणः ये वा विनष्टद्रव्याणां जीर्णवस्त्रभिन्न भाजनादीनां अविज्ञातस्वामिकानां विक्रायकास्ते सर्वे चौर्य्ये सम्भावनया ग्राह्याः। एवं नानाविधचौर्य्यलिङ्गान्पुरुषान्गृहीत्वा एते चौराः किम्वा साधव इति सम्यक्परीक्षेत न पुनर्लिङ्गदर्शन मात्रेण चौर्य्यनिर्णयं कुर्यादचौरस्यापि लोभादि चौर्य्यलिङ्ग सम्बन्धसम्भवात्। यथाह नारदः॥

अन्यहस्तात्परिभ्रष्टमकस्मादुत्थितम्भुवि। चौरेण वा प्रतिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत्॥ तथा असत्याः सत्य सङ्काशाः सत्याश्चासत्यसन्निभाः। दृश्यन्ते विविधा भावास्तस्माद्युक्तम्परीक्षणमिति। एवञ्चौर्यशङ्कया गृहीतेनात्मा संशोधनीय इत्याह ॥ २७१ ॥

गृहीतः शङ्कया चौर्य्ये नात्मानञ्चेद्विशोधयेत्।
दापयित्वा हृतन्द्रव्यञ्चौरदण्डेन दण्डयेत् ॥२७२॥

यदि चौर्य्यशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानन्न शोधयति तर्हि वक्ष्यमाणधनदापनवधादिदण्डभाग्भवेदतो मानुषेण तदभावे दिव्येन वात्मा शोधनीयः। ननु नाहञ्चौर इति मिथ्योत्तरे कथम्प्रमाणं सम्भवति तस्याभावरूपत्वात्। उच्यते। दिव्यस्य तावद्भावाभावगोचरत्वं दृष्ट्वा वान्यतरः कुर्य्यादित्यत्र प्रतिपादितम्। मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न सम्भवति। तथापि कारणेन संसृष्टेभावरूपविरुद्धकारणसाधनमुखेनाभावमपि गोचरयत्येव। यथा नामापहारकाले मद्देशान्तरस्थ इत्यभियुक्तैर्भाविते चौर्य्याभावस्यार्थात् सिद्धेः शुद्धिर्भवत्येव। चौरदण्डमाह॥ २७२ ॥

चौरम्प्रदाप्यापहृतं घातयेद्विविधैर्वधैः।

यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्य्यस्तं स्वामिने अपहृतन्धनं स्वरूपेण मूल्यकल्पनया नवा दापयित्वा विविधैर्बधैर्घातयेत्। एतच्चोत्तमसाहसदण्डप्राप्तियोग्योत्तम द्रव्यविषयन्न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम्॥

साहसेषु य एवोक्तस्त्रिषु दण्डोमनीषिभिः। सएव दण्डः स्तेयेपि द्रव्येषु त्रिष्वनुक्रमात्। इति नारदवचनेन वधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापितत्वात्। यत्पुनर्दण्डमनुवचनम्॥

अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम्। अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेदिति। तदपि महापराधविषयम्। चारविप्रेषे अपवादमाह॥०॥

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥१७३॥

ब्राह्मणस्पुनः चौरं महत्यप्यपराधेन घातयेदपितु ललाटे ऽङ्कयित्वा स्वदेशान्निष्कासयेत्। अङ्कनञ्च श्वपदाकारं कार्य्यं। तथाच मनुः॥

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः। स्तेये च श्वपदङ्कार्य्यं ब्रह्महण्यशिराः पुमानिति। एतच्च दण्डोत्तर कालं प्रायश्चित्तमचिकीर्षतां द्रष्टव्यम्। यथाह मनुः॥

प्रायश्चित्तन्तु कुर्वाणाः सर्व्वे वर्णायथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसमिति। चौराद्यन्वेषणेऽप हृतद्रव्यप्राप्त्युपायमाह॥ २७३॥

घातितेऽपहृते दोषोग्रामभर्तुरनिर्गते। विवी तभर्तुस्तु पथि चौरोद्धर्तुरवीतके॥ २७४॥

यदि ग्राममध्ये मनुष्यादिप्राणवधोधनापहरणम्वा जायते तदा ग्रामपतेरेव चौरापेक्षाद्दोषः तत्परिहारार्थं स एव चौरं गृहीत्वा राज्ञेऽर्पयेत्तदशक्तौ हृतन्धनन्धनिने दद्याद्यदि चौरपदं स्वग्रामान्निर्गतन्न दर्शयति दर्शिते पुनस्तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चौरन्धनञ्चार्पयेत्। तथाच नारदः॥

गोचरे यस्य मुष्येत तेन चौरः प्रयत्नतः। ग्राह्योदाप्योऽथ वा शेषम्पदं यदि न निर्गतम्॥ निर्गते पुनरेतस्मान्न चेदन्यत्र पातितं। सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेदिति। विवीते त्वपहारे विवीतस्वामिनएव दोषः यदालभ्यन्येष तद्ध

तत्रभवत्यविवीतके वा विवीतादन्यत्र क्षेत्रे तदा चौरोद्धर्तुर्मार्गपालस्य दिक्पालस्य वापराधः ॥ २७४ ॥

किञ्च। स्वसीम्नि दद्याद्ग्रामस्तु पदम्वा यत्र गच्छति। पञ्चग्रामी वहिःक्रोशाद्दशग्राम्यथ वा पुनः ॥ २७५ ॥

यदा पुनर्ग्रामाद्वहिःसीमापर्यन्ते क्षेत्रे मोषादिकम्भवति तदा तद्ग्रामवासिनएव दद्युर्यदि सीम्नोवहिः चौरपदन्न निर्गतन्निर्गते पुनर्यत्र ग्रामादिके चौरपदम्प्रविशति स एव चौरार्प्पणादिकङ्कुर्य्यात्। यदा त्वनेकग्राममध्ये क्रोशमात्राद्वहिःप्रदेशे घातितोमुषितोवा चौरपदञ्च जनमर्द्दादिना भग्नन्तदा पञ्चानां ग्रामाणां समाहारः पञ्चग्रामी दशग्रामसमाहारोवा दद्यात्। विकल्पवचनन्तु यथा तत्प्रत्यासत्त्यपहृतधनप्रत्यर्प्पणादिकङ्कुर्य्यादित्येवमर्थं। यदात्वन्यतोपहृतन्धनन्दापयितुन्न शक्नोति तदास्वकोशादेव राजा दद्यात्॥

चौरहृतमवजित्य यथास्थानङ्गमयेत्स्वकोशाद्वा दद्यादिति गौतमस्मरणात्। मुषितामुषितसन्देहे मानुषेण दिव्येन वा निर्णयः कार्य्यः॥ यदि तस्मिन्दाप्यमाने भवेन्मोषे तु संशयः। मुषितः शपथन्दाप्योवन्धुभिर्वापि साधयेदिति वृद्धमनुस्मरणात्। अपराधविशेषे दण्डविशेषमाह ॥ २७५ ॥

**बन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः।**
**प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान्॥ २७६॥**

बन्दिग्राहादीन्बलावष्टम्भेन घातकांश्च नरान् शूलामारोपयेत्। अयञ्च वधप्रकारविशेषोपदेशः॥

अग्न्यागारायुधागारदेवतागारभेदकान्। हस्त्यश्व रथ हर्तृंश्च हन्यादेवाविचारयन् इति मनुस्मरणात्॥ २७६॥

**किञ्च। उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ।**
**कार्य्यौद्वितीयापराधे करपादैकहीनकौ॥ २७७॥**

वस्त्राद्युत्क्षिप्यापहरतीत्युत्क्षेपकः। वस्त्रादिबद्धं स्वर्णादि कन्निस्रस्योत्कृत्य वा योपहरत्यसौ ग्रन्थिभेदः तौ यथाक्रमङ्करेण संदंशसदृशेन तर्ज्जन्यङ्गुष्ठेन हीनकौ कार्य्यौ द्वीतीयापराधे पुनः करस्य पादस्य करपादश्च तदेकश्च करपादैकस्तद्धीनं ययोस्तौ करपादैकहीनकौ कार्य्यौ। उत्क्षेपकग्रन्थिभेदकयोरेकमेकं करं पादञ्च छिन्द्यादित्यर्थः। एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम्। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस इति नारदवचनात्। तृतीयापराधेतु वधएव। तथा च मनुः॥

अङ्गुलीग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वधमर्हतीति। जातिद्रव्यपरिमाणतो मूल्याद्यनुसारतो दण्डः कल्पनीय इति। जातिद्रव्यपरिमाणपरिग्रहविनियोग वयःशक्तिगुणदेशकालादीनान्दण्डगुरुलघुभावकारणानामा नन्त्यात्प्रतिद्रव्यम्वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह ॥ २७७ ॥

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः। देशकाल वयःशक्ति सञ्चिन्त्य दण्डकर्मणि ॥ २७८ ॥

क्षुद्राणां मध्यमानामुत्तमानाञ्च द्रव्याणां हरणे सारतो मूल्याद्यनुसारतो दण्डः कल्पनीयः। क्षुद्रादिद्रव्यस्वरूपञ्च नारदेनोक्तम् ॥

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्। शमीधान्यं कृतान्नञ्च क्षुद्रं द्रव्यमुदाहृतम्। वासः कौशेयवर्जञ्च गोवर्जं पशवस्तथा। हिरण्यवर्जं लोहञ्च मध्यं व्रीहियवा अपि। हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः। देवब्राह्मणराज्ञाञ्च द्रव्यम्विज्ञेयमुत्तमम्। त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमस्तेनैव दर्शितः। साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेपि द्रव्येषु त्रिष्वनुक्रमात् इति मृण्मयेषु मणिकमल्लिकादिषु गोव्यतिरिक्तेषु

महिषमेषादिपशुषु ब्राह्मणसम्बन्धिषु कनकधान्यादिषु तार
तम्यभावोस्तीत्युपाधिवशद्दण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण
दण्डः कल्पनीयः। तत्र च दण्डकर्मणि दण्डकल्पनायान्तद्धेतु
भूतदेशकालवयःशक्तिसम्यक्चिन्तनीयं। एतच्च जातिद्रव्य
परिमाणादीनामुपलक्षणम्। तथाष्टापादं स्तेयकिल्बिषं
शूद्रस्य द्विगुणोत्तराणीतरेषाम्प्रतिवर्णं विदुषोऽतिक्रमे दण्ड
भूयस्त्वमिति। अयमर्थः। किल्बिषशब्देनात्र दण्डोलक्ष्यते।
यस्मिन्नपहारे योदण्डउक्तः स विट्शूद्रकर्तृकेपहारेष्टगुण
आपादनीयः। इतरेषां पुनर्विट्क्षत्रिय ब्राह्मणादीनाम्विदुषां
स्तेयेद्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणा
दण्डा आपादनीयाः। यस्माद्विद्वच्छूद्रादिकर्तृकेऽपहारे
दण्डभूयस्त्वं मनुनाप्ययमेवार्थोदर्शितः। अष्टापाद्यन्तु शूद्रस्य
स्तेये भवति किल्बिषम्। षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य
तु। ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्। द्विगुणा वा
चतुःषष्टिस्तद्दोषगुणवेदिन इति। तथा परिमाणकृतमपि दण्ड
गुरुत्वं दृश्यते। यथाह मनुः॥

धान्यन्दशभ्यः कुम्भेभ्योहरतोभ्यधिकम्बधः। शेषेप्येकादश
गुणन्दाप्यस्तस्य च तद्धनमिति। विंशतिद्रोणकः कुम्भः हर्तु
र्ह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालापेक्षया वा
ताडनाङ्गच्छेदनवधरूपादण्डा योज्याः। तथा सङ्ख्याविशेषा
दपि दण्डविशेषोरत्नादिषु॥

सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्। रत्नानाञ्चैव सर्व्वेषां शतादभ्यधिके वधः। पञ्चाशतस्त्वभ्यधिके हस्तच्छेदन मिष्यते। शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेदिति। तथा द्रव्यविशेषादपि। पुरुषाणां कुलीनानान्नारीणाञ्च विशेषतः। रत्नानाञ्चैव सर्व्वेषां हरणे वधमर्हति। अकुलीनानान्तु दण्डान्तरम्॥

पुरुषं हरतोदण्डउक्त उत्तमसाहसः। स्वपराधे तु सर्व्वस्वङ्कन्यान्तुहरतोवधइति। क्षुद्रद्रव्याणान्तु॥

माषतोन्यूनमूल्यानां मूल्यात्पञ्च गुणोदमः। काष्ठभाण्ड तृणादीनां मृन्मयानान्तथैव च। वेणुवैणवभाण्डानान्तथा स्नाय्वस्थिचर्म्मणाम्। शाकानामार्द्रमूलानां हरणे फलमूलयोः। गोरसेक्षुविकाराणां तथा लवणतैलयोः। पक्वान्नानां कृता न्नानां मद्यानामामिषस्य च। सर्व्वेषामल्पमूल्यानां मूल्या त्पञ्च गुणोदमः इति नारदवचनात्। यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चाशत्पर्य्यन्तोसौ माषमूल्ये तदधिक मूल्ये च यथायोग्यं व्यवस्थापनीयः यत्पुनर्मानवं क्षुद्रद्रव्य गोचरं वचनन्तन्मूल्यात् द्विगुणोदम इति तदल्पप्रयोजनशता वरादिविषयम्। तथापराधगुरुत्वादपि दण्डगुरुत्वं। यथा॥

सन्धिम्भित्वातु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः। तेषां छित्वा नृपोहस्तौ तीक्ष्णशूले निवेशयेदित्येवं सर्व्वेषामानन्त्या त्प्रतिद्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरु

ऽयमु भावः कल्पनीयः। पथिकानां पुनरल्पापहारेण दण्डः। यथाह मनुः॥

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति। तथा चणकव्रीहिगोधूम यवानां मुद्गमाषयोः। अनिषिद्धैर्ग्रहीतव्या मुष्टिरेका पथि स्थितैः। तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तन विधानेन हर्त्तव्यं हीनकर्म्मण इति। अचौरस्यापि चौरोप कारिणो दण्डमाह॥ २७८॥

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्। दत्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः॥ २७९॥

भक्तमशनम्। अवकाशो निवासस्थानं। अग्निश्चौरस्य शीता पनोदाद्यर्थः उदकं तृषितस्य मन्त्रश्चौर्य्यप्रकारोपदेशः। उप करणं चौर्य्यसाधनम्। व्ययः अपहारार्थं देशान्तरं गच्छतः पाथेयं। एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि यः प्रय च्छति तस्योत्तमसाहसो दण्डः। चौरोपेक्षिणामपि दोषः। शक्ताश्च यदुपेक्षन्ते तेऽपि तद्दोषभागिन इति नारदस्मरणात् ॥२७८॥

किञ्च। शस्त्रावपाते गर्भस्य पातने चोत्तमोदमः।
उत्तमोवाधमोवापि पुरुषस्त्रीप्रमापणे॥ २८०॥

परगात्रेषु शस्त्रस्यावपातने दासीब्राह्मणगर्भव्यतिरेकेण गर्भस्य पातने चोत्तमोदमः। दासीगर्भनिपाते तु दासीगर्भ विनाशकृदित्यादिना शतदण्डोभिहितः। ब्राह्मणगर्भविनाशे तु हत्वागर्भमविज्ञातमित्यत्र ब्रह्महत्यातिदेशं वक्ष्यति। पुरुषस्य स्त्रियाश्च प्रमापणे शीलवृत्ताद्यपेक्षयोत्तमोवाधमोवा दण्डोव्यवस्थितोवेदितव्यः॥ २८०॥

अपिच। विप्रदुष्टां स्त्रियञ्चैव पुरुषघ्नीमगर्भिणीं।
सेतुभेदकरीञ्चाप्सु शिलां वध्वा प्रवेशयेत्॥ २८१॥

विशेषेण प्रदुष्टा विप्रदुष्टा भ्रूणघ्नीस्वगर्भपातिनी च याच पुरुषस्य हन्त्री सेतूनाम्भेत्री च एताः गर्भरहिताः स्त्रीर्गले शिलां बध्वाप्सु प्रवेशयेत्। यथान प्लवते॥ २८१॥

किञ्च। विषाग्निदाम्पतिगुरुनिजापत्यप्रमापिणीं।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्
॥ २८२॥

अगर्भिणीमित्यनुवर्तते। या च परवधार्थमन्नपानादिषु विष न्ददाति क्षिपति या च दाहार्थं ग्रामादिष्वग्निं ददाति। तथा। या च निजपतिगुर्वपत्यानि मारयति। ताञ्छिन्नकर्णकरनासौष्ठीं कृत्वा ऽदान्तैर्दुष्टबलीवर्दैः प्रवाह्य मारयेत्। स्तेयप्रकरणे यदे तत्साहसिकस्य दण्डविधानन्तत्प्रासङ्गिकमिति मन्तव्यम्। अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह ॥२८२॥

अविज्ञातहतस्याशु कलहं सुतबान्धवाः।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्॥२८३॥

अविज्ञातपुरुषेण घातितस्य सम्बन्धिनः सुताः प्रत्यासन्नाश्च बान्धवाः केनास्य कलहो जात इति कलहमाशु प्रष्टव्याः। तथा हतस्य सम्बन्धिन्यो योषितो याश्च परपुंसि रता व्यभिचारिण्यस्ता अपि प्रष्टव्याः। कथम्प्रष्टव्या इत्याह ॥२८३॥

स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह।
मृत्युदेशसमासन्नं पृच्छेद्वापि जनं शनैः॥२८४॥

किमयं स्त्रीकामो द्रव्यकामो वृत्तिकामो वा। तथा कस्यां किं सम्बन्धिन्यामन्यस्त्रियामस्य रतिरासीत्कस्मिन्वा द्रव्ये प्रीतिः।

कुतोवा हृत्तिकामः केन वा सह देशान्तरङ्गतइति नाना प्रकारव्यभिचारिणोयोषितः पृथक् विश्वास्य प्रष्टव्याः। तथा मरणदेशनिकटवर्त्तिनोगोपाटविकाद्या ये जनास्तेपि विश्वास पूर्व्वकम्प्रष्टव्याः। एवन्नानाप्रकारैः प्रश्नैर्हन्तारं निश्चित्य तदुचितोदण्डोविधातव्यः॥ २८४॥

किञ्च। क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥२८५॥

क्षेत्रम्पक्कफलशस्योपेतम्वेश्म गृहम्। वनमटवी क्रीडावनम्वा। ग्रामम्विवीतमुक्तलक्षणम् खलम्वा ये दहन्ति यश्च राजपत्नीमभिगच्छति तान्सर्वान् कटैर्वीरणमयैर्वेष्टयित्वा दहेत्। क्षेत्रादिदाहकानां मारणदण्डप्रसङ्गाद्दण्डविधानम्॥ इतिस्तेयप्रकरणम्॥ ०॥

स्त्रीसंग्रहणाख्यम्विवादपदं व्याख्यायते। प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं व्यासेन विवृतम्॥

त्रिविधन्तत्समाख्यातम्प्रथमं मध्यमोत्तमम्। अदेशकालभाषाभिर्निर्जने च परस्त्रियाः॥ कटाक्षावेक्षणं हास्यम्प्रथमं साहसं स्मृतम्। प्रेषणङ्गन्धमाल्यानान्धूपभूषणवाससां॥ प्रलोभनं चान्नपानैर्मध्यमं समदाहृतम्। सहासनं विविक्तेषु

परस्परमपाश्रयः॥ केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम्॥ स्त्रीपुंसयोर्मिथुनीभावः संग्रहणं संग्रहणज्ञानपूर्व्वकत्वात्तत्कर्त्तुर्दण्डविधानस्य तज्ज्ञानोपायं तावदाह॥ २८५॥

पुमान्संग्रहणे ग्राह्यः केशाकेशिपरस्त्रियाः।
सद्योवा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा॥ २८६॥

संग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः। परस्परकेशग्रहणपूर्व्विकाक्रीडा केशाकेशि तच्च तेनेदमिति सरूपइति बहुव्रीहौ सति इच्कर्म्मव्यतिहारइति समासान्तइच्प्रत्ययः अव्ययत्वाच्च लुप्तहतीयाविभक्तिः ततश्चायमर्थः। परभार्य्यया सह केशाकेशिक्रीडनेनाभिनवैः करदहृदशनादिकृतव्रणैः रागकृतैर्लिंगैर्द्वयोः सम्प्रतिपत्त्यावा ज्ञात्वा संग्रहणे प्रवृत्तोग्रहीतव्यः। परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदासार्थं॥ २८६॥

किञ्च। नीवीस्तनप्रावरणसक्थिकेशावमर्शनं।
अदेशकालसम्भाषं सहैकस्थानमेवच॥ २८७॥

यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्द्धरुहादिस्पर्शनं साभिलाषइवाचरति। तथादेशे निर्जने

जनताकीर्णे वान्धकाराकुलेऽकाले संलापनङ्करोति। पर भार्य्यया वा सहैकमञ्चकारी रिरंसये वावतिष्ठते सोपि संग्रहणे प्रवृत्तोग्राह्यः। एतच्चाग्राह्यमानदोषपुरुषविषयमितरस्य न दोषः। यथाह मनुः॥

यस्त्वनाचारितः पूर्व्वमभिभाषेत कारणात्। न दोषम्प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमइति। यः परस्त्रिया स्पृष्टः क्षमते सावपि ग्राह्यइति तेनैवोक्तम्॥

स्त्रियं स्पृशेददेशे यः स्पृष्टोवा मर्षयेत्तथा। परस्परस्यानुमते सर्वं संग्रहणं स्मृतमिति। यश्च मयेयन्विदग्धाऽसकृद्रमिता चरितेति श्लाघया भुजङ्गजनसमक्षं ख्यापयत्यसावपि ग्राह्यइति तेनैवोक्तम्॥

दर्प्पाद्वा यदि वा मोहात् श्लाघयावा स्वयं वदेत्। पूर्व्वं मयेयम्भुक्तेति तच्च संग्रहणं स्मृतम्। प्रतिषिद्धयोः स्त्रीपुंसयोः पुनःसंलापादिकरणे दण्डमाह॥२८७॥

**स्त्रीनिषेधे शतन्दद्याद्विशतन्तु दमम्पुमान्। प्रतिषेधे तयोर्दण्डोयथा संग्रहणे तथा॥२८८॥**

प्रतिषिध्यतइति प्रतिषेधः पतिपित्रादिभिर्य्येन सह सम्भाषणादिकन्निषिद्धन्तच्च प्रवर्त्तमाना स्त्री शतपणन्दण्डन्दद्यात्। पुरुषः पुनरेवन्निषिद्धे प्रवर्त्तमाने द्विशतन्दद्यात्। द्वयोस्तु

स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्त्तमानयोः संग्रहणे स्त्रीणां चैवानुचारेण चोरस्योपचर्य्यते स एव विशेषः। एतच्च चारणादि भार्य्याव्यतिरेकेण ॥

नैष चारणदारेषु विधिर्नात्मोपजीविषु। सज्जयन्ति हि ते नारीं निगूढाश्चारयन्ति चेति मनुस्मरणात्। तं द्विविधमिदानीं संग्रहणे दण्डमाह ॥ २८८ ॥

सजातावुत्तमोदण्ड आनुलोम्ये तु मध्यमः।
प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम् ॥ २८९ ॥

चतुर्णामपि वर्णानाम्बलात्कारेण सजातीयगुप्तपरदाराभिगमे साशीतिपणसहस्रन्दण्डनीयः। यदात्वानुलोम्येन हीनवर्णां स्त्रियमगुप्तामभिगच्छति। तदा मध्यमसाहसन्दण्डनीयः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा मानवे विशेष उक्तः ॥

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥ सहस्रं ब्राह्मणो दण्डन्दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः साहस्रं तु भवेद्दमः इति। एतच्च गुरुसखिभार्य्याव्यतिरेकेण द्रष्टव्यम्। माता

मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥ दुहिताचार्य्यभार्य्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वीवर्णोत्तमा च या॥ आसामन्यतमाङ्गच्छन् गुरुतल्पग उच्यते॥ शिश्नस्योत्कर्तनात्तत्र नान्योदण्डोविधीयत इति नारदस्मरणात्। प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः। एतच्च गुप्ताविषयमन्यत्र तु धनदण्डः॥

उभावपि हितावेव ब्राह्मण्यागुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्या वा कटाग्निना॥ ब्राह्मणीं यद्यगुप्तान्तु सेवेतां वैश्यपार्थिवौ। वैश्यम्पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिकमिति मनुस्मरणात्। शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतोलिङ्गच्छेदनसर्व्वस्वापहारौ गुप्तान्तु व्रजतः तस्य वधसर्व्वस्वापहाराविति तेनैवोक्तम्॥

शूद्रो गुप्तमगुप्तंवा द्वैजातं वर्णमावसन्। अगुप्तैकाङ्गसर्व्वस्वी गुप्ते सर्व्वेण हीयतइति। नार्य्याः पुनर्हीनवर्णं व्रजन्त्याः कर्णयोरादिग्रहणान्नासादेश्च कर्त्तनम्। आनुलोम्ये सवर्णं वा व्रजन्त्यादण्डः कल्प्यः। अयञ्च वधाद्युपदेशोराज्ञएव तस्यैव पालनेधिकारान्न द्विजातिमात्रस्य। ब्राह्मणःपरीक्षार्थमपि शस्त्रं नाददीतेति शस्त्रग्रहणनिषेधात्। यदा तु राज्ञोनिवेदने कालविलम्बनेन कार्य्यातिपातशङ्का तदा स्वयमेवजारादीन् हन्यात्॥

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते। नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वा प्रकाशं वा मन्युस्तंमन्युमृच्छतीति मनुस्मरणाभ्यनुज्ञानाच्च। तथा क्षत्रियवैश्ययोरन्योन्यस्त्र्यभिगमने यथाक्रमं सहस्रपञ्चशतपणात्मकौ दण्डौ वेदितव्यौ। तदाह मनुः॥

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायान्तावुभौ दण्डमर्हति। परदारप्रसङ्गात्कन्यायामपि दण्डमाह॥ २८९॥

अलङ्कृतां हरन् कन्यामुत्तमन्त्वन्यथाधमम्।
दण्डन्दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः॥ २९०॥

विवाहाभिमुखीभूतामलङ्कृतां सवर्णां कन्यामपहरन्नुत्तमसाहसं दण्डनीयः। तदनभिमुखीं सवर्णां हरन्प्रथमसाहसम्। उत्कृष्टवर्णजां कन्यामपहरतः पुनः क्षत्रियादेर्वध एव। दण्डविधानाच्चापहर्तुः सकाशादाच्छिद्यान्यस्मै देयेति गम्यते। आनुलोम्यापहरणे दण्डमाह॥ २९०॥

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः।

यदि सानुरागां हीनवर्णां कन्यामपहरति तदा दोषा भावान्न दण्डः । अन्यथा त्वनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः । कन्यादूषणे दण्डमाह ॥०॥

दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥२९१॥

अनुलोमास्वित्यनुवर्त्तते । यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य करश्छेत्तव्यः । यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्व्वन् दूषयति तदामनूक्तषट् शतसहितांगुलिच्छेदः ॥

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः । तस्याशुकर्त्त्यौ अङ्गुल्यौ दण्डञ्चार्हति षट्शतमिति । यदा पुनः सानुरागां पूर्व्ववद्दूषयति । तदा तेनैव विशेष उक्तः । सकामां दूषयाणस्तु नाङ्गुलिच्छेदमर्हति । द्विशतन्तु दमन्दाप्यः प्रसङ्गविनिवृत्तत इति । यदा तु कन्यैव कन्यां दूषयति विदग्धा वा तत्रापि विशेषस्तेनैवोक्तः ॥०॥

कन्यैव कन्यां वा कुर्य्यात्तस्यास्तु द्विशतो दमः । या तु कन्यां प्रकुर्य्यात्स्त्री सा सद्यो मौण्ड्यमर्हति । अङ्गुल्योरेव च छेदं खरेणोद्वहनन्तथेति । कन्यां कुर्य्यादिति । कन्यां योनिक्षतवतीं कुर्य्यादित्यर्थः । यदा पुनरुत्कृष्टजातीयां कन्यामविशेषात्सानुरागामकामाम्वाभिगच्छति तदा हीनस्य क्षत्रियादेर्वधः ।

उत्तमां सेवमानस्तु अवध्योवधमर्हतीति मनुस्मरणात्। यदा सवर्णां सकामामभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्याद्यदीच्छति। पितरि तु शुल्कमनिच्छति दण्डरूपेण तद्देव राज्ञे दद्यात्। सवर्णामकामान्तु गच्छतोवधएव। यथाह मनुः॥

शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि। योकामां दूषयेत्कन्यां ससद्योवधमर्हति॥ सकामां दूषयंस्तुल्योन वध आप्नुयान्नरइति॥ २९१॥

किञ्च। शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने। पशून्गच्छन् शतं दाप्योहीनां स्त्रीगाञ्च मध्यमम् ॥ २९२॥

स्त्रीशब्देनाच प्रकृतत्वात्कन्यावम्टह्यते। तस्यां यदि कश्चिद्विद्य मानामेवापस्मारराजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वा दिदोषान्प्रकाश्येयमकन्येति दूषयति असौ शतन्दाप्यः। मिथ्याभिशंसने पुनरविद्यमानदोषाविष्कारेण दूषणे द्वेशते दापनीयः॥ गोव्यतिरिक्तपशुगमने तु शतंदाप्यः। यः पुन र्हीनां स्त्रियमन्त्यावसायिनीमविशेषात्कामामकामां वा गाञ्चा धिगच्छत्यसौ मध्यमसाहसं दण्डनीयः। साधारणस्त्रीगमने दण्डमाह॥२९२॥

अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्या स्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दमम्॥ २९३॥

गच्छन्नित्यनुवर्त्तते। उक्तलक्षणावर्णस्त्रियोदास्यस्ता एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतोनिरुद्धाः अवरुद्धाः पुरुषनियतपरिग्रहा भुजिष्याः। यदादास्योवरुद्धा भुजिष्या वा भवेयुस्तदा तासु तथा च शब्दादेश्याखैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां ग्रहणन्तासु च सर्व्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणन्दण्डन्दापनीयः। परपरिगृहीतत्वेन तासाम्परदारतुल्यत्वात्। एतच्च स्पष्टमुक्तन्नारदेन॥

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी तथा। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः। आस्वेव तु भुजिष्यासु दोषःस्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहा इति। निष्कासिनी स्वाम्यनवरुद्धा दासी। ननुच स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम्। नहि जातितः शास्त्रतोवाकाश्चनलोके साधारणाः स्त्रियउपलभ्यन्ते। तथाहि। स्वैरिण्योदास्यश्च तावद्वर्णस्त्रियएव। स्वैरिणी या पतिं हित्वा सर्व्ववर्णं कामतः श्रयेत्। वर्णानामानुलोम्येन दास्यं न प्रतिलोमत इति स्मरणात्। नच वर्णस्त्रीणाम्पत्यौ जीवति मृते वा पुरुषान्तरोपभोगोघटते॥

दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। परिचार्य्यः स्त्रिया साध्व्या सततन्देववत्पतिः॥ कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्येति निषेधस्मरणात्। नापि कन्यावस्थायां साधारणत्वं पित्रादिपरिरक्षितायाः कन्याया एव दानोपदेशाद्दात्रभावेपि तथाविधाया एव स्वयम्वरोपदेशात्। नच दासीभावात् स्वधर्म्माधिकारच्युतिः। पारतन्त्र्यं हि दास्यन्न स्वधर्म्मपरित्यागः। नापि वेश्यासाधारणी वर्णानुलोमजव्यतिरेकेण गम्यजात्यन्तरासम्भवात्। तदन्तः पातित्वे च पूर्व्ववदेवागम्यत्वं प्रतिलोमजत्वे तु तासान्नितरामगम्यत्वम्। अतः पुरुषान्तरोपभोगे तासाम्विन्हितकर्म्माभ्यासेन पातित्यात्पतितसंसर्गस्य च निषिद्धत्वान्न सकलपुरुषोपभोगयोग्यत्वं। सत्यमेवं। किन्त्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदण्डभयाददृष्टदोषाभावाद्गम्यत्ववाचोयुक्तिः। दण्डाभावस्यावरुद्धासु दासीष्विति नियतपुरुषपरिग्रहोपाधितोदण्डविधानात्तदुपाधिरहिता स्वर्थाद्गम्यते। स्वैरिण्याद्यानां पुनर्दण्डाभावोविधानाभावात्कन्याम्भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेदिति लिङ्गदर्शनाच्चावगम्यते। प्रायश्चित्तन्तु स्वधर्म्मस्खलननिमित्तं गम्यानाङ्गन्तॄणाञ्चाविशेषाद्भवत्येव। यत्पुनर्वेश्यानाञ्जात्यन्तरासम्भवेन वर्णान्तः पातित्यमनुमानादुक्तम्। वेश्यावर्णानुलोमाद्यन्तः पातिन्योमनुष्यजात्याश्रयत्वाद्ब्राह्मणादिवदिति। तन्न। कुण्ड

गोत्वजात्यादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या काचिज्जाति रन्यादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसंयोगवृत्तिर्वेश्येति ब्राह्मणादिवल्लोकप्रसिद्धिबलादभ्युपगमनीयम्। न च निर्मूलेयं प्रसिद्धिः। स्मर्यते हि स्कन्दपुराणे पञ्चचूडा नामकाश्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति। अतस्तासामनियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमनेनादृष्टदोषेनापि दण्डस्तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डस्तथाप्यदृष्टदोषोस्त्येव। स्वदारनिरतः सदेति नियमात्। पशुवेश्याभिगमने प्राजापत्यं विधीयते। इतिप्रायश्चित्तस्मरणाच्चेति निरवद्यम्। अवरुद्धासु दासीष्वित्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतस्तास्वभुजिष्यासु दण्डो नास्तीत्यर्थादुक्तम्। तस्यापवादमाह॥ २९३॥

प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः। बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक्॥२९४॥

पुरुषसंभोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानविरहेण प्रसह्य बलात्कारेणाभिगच्छतो दशपणो दण्डः। यदि बहवएकामनिच्छन्तीमपि बलात्कारेणाभिगच्छन्ति तर्हि

प्रत्येकञ्चतुर्व्विंशतिपणपरिमितन्दण्डं दण्डनीयाः। यदा पुन स्तदिच्छया भाटिं दत्वा पश्चादनिच्छन्तीमपि बलाद्भजन्ति तदा तेषामदोषः। यदि व्याध्याद्यभिभवस्तस्या न स्यात्। व्याधितासु अमाह्नया राजकर्म्मपरायणा। आमन्त्रिता चेन्ना गच्छेद्दण्ड्यावडवाभृतेति नारदवचनात् ॥ २९४ ॥

किञ्च। गृहीतवेतना वेश्या नेच्छन्ती द्विगुणम्वहेत्। अगृहीते समन्दाप्यः पुमानप्येवमेव च ॥ २९५ ॥

यदा तु शुल्कं गृहीत्वा स्वस्थापि तं नेच्छति तदा शुल्कं द्विगुणन्दद्यात्। तथा शुल्कं दत्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव ॥

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणम्वहेत्। अनिच्छन् दत्तशुल्कोपि शुल्कहानिमवाप्नुयादिति तेनैवोक्तम्। तथान्योपि विशेषस्तेनैव दर्शितः ॥

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्। अक्रमेण च सङ्गच्छन् तथाद्न्तनखादिभिः। अयोनौ चाभिगच्छेद्यो वहुभिर्व्वाभिवासयेत्। शुल्कमष्टगुणन्दाप्योविनयन्तावदेव तु। वेश्या प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुरिति ॥ २९५ ॥

किञ्च। अयोनौ गच्छतो योषां पुरुषं वापि मेहतः। चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९७ ॥

यस्तु योषां मुखादावभिगच्छति। पुरुषं वाभिमुखो मेहति तथा प्रव्रजितां वा गच्छत्यसौ चतुर्विंशतिपणान्दण्डनीयः। ॥ २९७ ॥

किञ्च। अन्त्याभिगमने त्वङ्क्य कुबन्धेन प्रवासयेत्। शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्य्यागमे वधः ॥ २९८ ॥

अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान् प्रायश्चित्तानभिमुखान्सहस्रं त्वन्त्यजस्त्रियमिति मनुवचनात् पणसहस्रं दण्डयित्वा कुबन्धेन कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत्। प्रायश्चित्ताभिमुखस्य पुनर्दण्डनमेव। शूद्रः पुनश्चाण्डाल्यभिगमे अन्त्यज एव चण्डाल एव भवति। अन्त्यजस्य पुनश्चण्डालादेरुत्कृष्टजातिस्त्र्यभिगमे वध एव इति स्त्रीसंग्रहणप्रकरणम् ॥ २९८ ॥

व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यमप्यपरं विवादपदं मनुनारदाभ्यां विहितम्। तत्र नारदः॥

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्त्यते। स्त्रीपुंसयोगसंज्ञन्तद्विवादपदमुच्यते इति। मनुरप्याह॥

अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनोवश इत्यादि। यद्यपि स्त्रीपुरुषयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारोनिषिद्धस्तथापि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्पराभिचारे दण्डादिना दम्पती निजधर्म्ममार्गे राज्ञा स्थापनीयौ। इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्म्ममध्ये अस्य स्त्रीपुंसधर्म्मजातस्योपदेशः। एतच्च विवादप्रकरणे एव सप्रपञ्चम्प्रतिपादितमिति योगीश्वरेण न पुनरत्रोक्तम्॥ साम्प्रतम्प्रकीर्णकाख्यं व्यवहारपदम्प्रस्तूयते। तल्लक्षणञ्च कथितं नारदेन॥

प्रकीर्णके पुनर्ज्ञेयाव्यवहारानृपाश्रयाः। राज्ञामाज्ञा प्रतीघातस्तत्कर्म्मकरणं तथा॥ पुरः प्रदानं संभेदः प्रकृतीनान्तथैव च। पाषण्डिनैगमश्रेणिगणधर्म्मविपर्य्ययाः। पिता पुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः। प्रतिग्रहविलोपश्च आश्रमीकोपणामपि। वर्णसङ्करदोषश्च तद्वृत्तिर्नियमस्तथा। न दृष्टं यच्च पूर्व्वेषु सर्व्वं तत्स्यात्प्रकीर्णकमिति। प्रकीर्णके विवादपदे ये विवादाराज्ञोशासनन्तदाज्ञाकरणादिविषयास्ते नृपसम

वासिनः । नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्त्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्य्यात् । एवञ्च वदता योनृपाश्रयोव्यवहारः तत्प्रकीर्णकमित्यर्थात् लक्षितम्भवति । तत्रापराधविशेषेण दण्डविशेषमाह ॥

ऊनं वाप्यधिकं वापि लिखेद्योराजशासनम् ।
पारदारिकचौरं वा मुञ्चतोदण्ड उत्तमः ॥२९९॥

राजदत्तभूमेर्निबन्धनस्य वा परिमाणान्न्यूनत्वमाधिक्यं वा अप्रकाशयन् राजशासनं योलिखति । यश्च पारदारिकचारं गृहीत्वा राज्ञे अनर्पयित्वा मुञ्चति तावुभौ उत्तमसाहसन्दण्डनीयौ । प्रसङ्गान्नृपाश्रयव्यतिरिक्तव्यवहारविषयमपि दण्डमाह ॥२९९॥

अभक्ष्येण द्विजं दूष्यन्दण्डउत्तमसाहसम् ।
मध्यमं क्षत्रियं वैश्यम्प्रथमं शूद्रमर्द्धकम् ॥ ३०० ॥

मूत्रपुरीषादिना भक्षानर्हेणान्नपानादिमिश्रणेन द्रव्यरूपेण वा ब्राह्मणन्दूषयित्वा खादयित्वोत्तमसाहसं दण्डोभवति । क्षत्रियं पुनरेवं दूषयित्वा मध्यमम् । वैश्यं दूषयित्वा

प्रथमं पूर्वं दूषयित्वा प्रथमसाहसस्यार्द्धं दण्ड्यो भवतीति सम्बन्धः। सम्पूर्णमाद्यभक्ष्यदूषणे तु दोषतारतम्याद् दण्डतारतम्यमूहनीयम्॥ ३००॥

किञ्च। कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।
अङ्गहीनस्तु कर्त्तव्यो दाप्यश्चोत्तमसाहसम्॥ ३०१॥

रसवेधाद्यापादितवर्णोत्कर्षैः कूटैः स्वर्णैर्व्यवहारशीलोयः स्वर्णकारादिर्यश्च विमांसस्य कुत्सितमांसस्य श्वादिसम्बन्धस्य विक्रयशीलः सौनिकादिः। चशब्दात्कूटरजतादिव्यवहारी च ते सर्व्वे प्रत्येकनासाकर्णकरैस्त्रिभिरङ्गैर्हीनाः कार्य्याः। चशब्दादङ्गच्छेदेन समुचितमुत्तमसाहसम् दण्डन्दाप्याः। यत्पुनर्मनुनोक्तं॥
सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः। प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैरिति। तदेतद्देवब्राह्मणराजस्वर्णविषयं विषयविशेषे दण्डाभावमाह॥ ३०१॥

चतुष्पादकृतो दोषो नापैहीति प्रजल्पतः। काष्ठलोष्टेषु पाषाणबाहुयुग्यकृतस्तथा॥ ३०२॥

चतुष्पाद्भिर्गोगजादिभिः कृतो यो दोषो मनुष्यमारणादि रूपोऽसौ गवादिस्वामिना न भवत्यपसरेति प्रकर्षेणोच्चैर्भाषमाणस्य तथा लगुडलोष्ठशायकपाषाणोत्क्षेपणेन बाहुना युग्येन च युगस्वहताश्वादिना कृतोयः पूर्वोक्तो दोषः सोपि काष्ठादीन् प्रास्यतो न भवत्यपसरेति प्रजल्पतः। काष्ठाद्युत्क्षेपणेन हिंसायान्दोषाभावकथनन्दण्डाभावप्रतिपादनार्थं। प्रायश्चित्तं पुनरबुद्धिपूर्व्वकरणनिमित्तमस्त्येव काष्ठादिग्रहणञ्च शक्तितोमरादिकस्योपलक्षणार्थं॥ ३०२॥

किञ्च। छिन्ननस्येन यानेन तथा भग्नयुगादिना।
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक्॥ ३०३॥

नसि भवा रज्जुर्नस्या छिन्ना शकटयुक्तबलीवर्दनस्यारज्जुर्यस्मिन् याने तच्छिन्ननस्यं शकटादि तेन तथा भग्नयुगेन आदिग्रहणाद्भग्नाक्षचक्रादिना च यानेन पश्चात्पृष्ठतोपसरता चशब्दात्तिर्य्यगपगच्छता प्रतिमुखञ्चापगच्छता च मनुष्यादि हिंसने स्वामी प्राजको वा दोषभाङ्न भवति अतस्तत्प्रयत्नजनितत्वाद्धिंसनस्य। तथाच मनुः॥

छिन्ननस्ये भग्नयुगे तिर्य्यक् प्रतिमुखागते। अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च। छेदने चैव यन्त्राणां योक्त्ररश्म्योस्त

त्सवैव। आक्रन्दे चाप्यपैतीति न दण्डं मनुरब्रवीदिति। उपे क्षायां स्वामिनो दण्डमाह॥ ३०१॥

शक्तोऽप्यमोचयन् स्वामी दंष्ट्रिणां शृङ्गिणान्तथा।
प्रथमं साहसन्दद्याद्विक्रुष्टे द्विगुणन्तथा॥ ३०४॥

अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिः शृङ्गिभिर्गवादिभिर्बध्यमानं समर्थोपि स्वामी यद्यमोचनुपेक्षते। तथाऽकुशलप्राजकनियोजननिमित्तं प्रथमसाहसन्दण्डं दद्यात्। यदातु मारितोहमिति विक्रुष्टेपि न मोचयति तदा द्विगुणं। यदा पुनः प्रवीणमेव प्राजकम्प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी। यथाहमनुः॥

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हतीति। प्राजकोयन्ता। आप्तोभियुक्तः। प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः। यथाह मनुः॥

मनुष्यमारणे क्षिप्रञ्चौरवत् किल्बिषीभवेत् प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु॥ क्षुद्रकाणाम्पशूनान्तु हिंसायां द्विशतो दमः। पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥ गर्दभाजाविकानान्तु दण्डः स्यात्पञ्चमाषकः। माषकस्तु भवेद्दण्डः श्वशूकरनिपातनइति॥ ३०४॥

किञ्च। जारञ्चौरेत्यभिवदन् दाप्यः पञ्चशतन्दमम्। उपजीव्यधनं मुञ्चंस्तदेवाष्टगुणीकृतं ॥ ३०५ ॥

स्ववंशकलङ्कभयात् जारम्पारदारिकञ्चौरं निर्गच्छेत्यभिवदन् पञ्चशतम्पणानाम्पञ्चशतानि यस्मिन् दमे सतथोक्तस्तं दमं दाप्यः। यः पुनर्जारहस्ताद्धनमुपजीव्य उत्कोचरूपेण गृहीत्वा जारं मुञ्चत्यसौ यावद्गृहीतन्तावदष्टगुणीकृतन्दण्डं दाप्यः ॥ ३०५ ॥

किञ्च। राज्ञोनिष्टप्रवक्तारन्तस्यैवाक्रोशकारणम्। तन्मन्त्रस्य च भेत्तारञ्छित्वा जिह्वां प्रवासयेत् ॥ ३०६ ॥

राज्ञोनिष्टस्यानभिमतस्यामित्रस्तोत्रादेः प्रकर्षेण भूयो भूयोवक्तारन्तस्यैव राज्ञआक्रोशकारिणं निन्दाकरणशीलन्तदीयस्य च मन्त्रस्य स्वराष्ट्रस्य विवृद्धिहेतोः परराष्ट्रापचयकरस्य वा भेत्तारममित्रकर्णेषु जपन्तन्तस्य जिह्वामुत्कृत्य स्वराष्ट्रान्निष्कासयेत्। कोशापहरणादौ पुनर्वधएव ॥

राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थिताम्। घातयेद्वि विधैर्दण्डैररीणाञ्चोपजापकानिति मनुस्मरणात्। विविधैः सर्व्व स्वापहाराङ्गच्छेदवधरूपैरित्यर्थः। सर्वस्वापहारेपि यद्यस्य जीवनोपकरणन्तन्नापहर्त्तव्यम् चौर्य्योपकरणम्विना। यथाह नारदः। आयुधान्यायुधीयानाम्वाह्यादीन् वाह्यजीविनाम्। वेश्यास्त्रीणामलङ्कारान् वाद्यातोद्यादितद्विदाम्। यच्च यस्यो पकरणं येन जीवन्ति कारुकाः। कर्व्वस्वहरणेप्येतन्न राजा हर्तुमर्हतीति। ब्राह्मणस्य पुनर्न शारीरोदण्डइति निषेधा द्वधस्थाने शिरोमुण्डनादिकङ्कर्त्तव्यम्। ब्राह्मणस्य वधोमौण्ड्यं पुरान्निर्वासनाङ्कने। ललाटे चाभिशस्ताङ्कः प्रयाणङ्गर्दभेन लिति मनुस्मरणात्॥ ३०६॥

किञ्च। मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा।
राजयानासनारोढुर्दण्डउत्तमसाहसः॥ ३०७॥

मृतशरीरसम्बन्धिनोवस्त्रपुष्पादेर्विक्रेतुर्गुरोः पित्राचार्य्या देस्ताडयितुस्तथा राजानुमतिं विना तद्यानङ्गजाश्वादिरासनं सिंहासनाद्यारोहतस्तोत्तमसाहसोदण्डः॥ ३०७॥

किञ्च। द्विनेत्रभेदिनोराजद्विष्टा देशकृतस्तथा।
विप्रत्वेन च शूद्रस्य जीवतोष्टशतोदमः॥ ३०८॥

यः पुनः क्रोधादिना परस्य नेत्रद्वयभिनत्ति यश्च ज्योतिः शास्त्रविद्भूर्धादिहितेषुर्व्यतिरिक्तो राज्ञोदिष्टमनिष्टं सभ्यस्य राज्ञे तवराज्यच्युतिर्भविष्यतीत्यादिरूपमादेशङ्करोति तथा यः शूद्रोभोजनार्थं यज्ञोपवीतादिब्राह्मणलिङ्गानि दर्शयति तेषामष्टशतोदमः। अष्टौ पणशतानि यस्मिन् दमे स तथोक्तः। आद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषधारिणस्तप्तशलाकया यज्ञोपवीतवद्दपृथ्यालिखेदिति स्मृत्यन्तरोक्तन्द्रष्टव्यं। वृत्त्यर्थन्तु ब्राह्मणवेषधारिणोवध एव। द्विजातिलिङ्गिनः शूद्रान् घातयेदिति स्मरणात्। रागलोभादिना अन्यथा व्यवहारदर्शने दण्डमाह॥३०८॥

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु। सभ्याः सजयिनोदण्ड्या विवादाद्द्विगुनन्दमम्॥ ३०९॥

दुर्दृष्टान् स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्कमानव्यवहारान् पुनः स्वयं सम्यक् विचार्य निश्चितदोषाः पूर्वसभ्याः जयिसहिताः प्रत्येकं विवादे योदमः पराजितस्य तं द्विगुणन्दाप्याः। अप्राप्तजेदण्डविधिपरत्वाद्वचनस्य रागाल्लोभादित्यादिश्लोकेनापौनरुक्त्यम्। यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिण

एव दण्ड्या: न त्रयो नापि सभ्या:। यद्दात्तु राजानुमत्या व्यव हारदृष्टलेनहा सर्व्वएव राजसहिता: सभ्याश्चोरवज्ज्ञेया:। पादोगच्छति कर्त्तारं पाद: साक्षिणमृच्छति। पाद: सभासद: सर्व्वान् पादोराजानमृच्छतीति वचनात्। एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरम्। न पुनरेकस्यैव पापापूर्व्वस्य विभागाय यथाक्रमं कर्त्तृसमवायिफलजननस्व भावत्वादपूर्व्वस्य न्यायतोनिर्णीतव्यवहारस्य प्रत्यावर्त्तयितु मिच्छमाह॥ ३०९॥

योमन्येनाजितोस्मीति न्यायेनापि पराजित:।
तमायान्तम्पुनर्जित्वा दापयेद्द्विगुणन्दमम्॥ ३१०॥

य: पुनर्न्यायमार्गेण पराजितोप्यौद्धत्यान्नाहम्पराजितो स्मीति मन्यते तमायान्तं कूटलेख्याद्युपन्यासेन पुनर्धर्माधि करणमधितिष्ठन्तन्धर्मेण पुन: पराजयं नीत्वा द्विगुणन्दण्ड न्दापयेत्। नारदेनाप्युक्तम्॥

तीरितश्चानुशिष्टश्च योमन्येत विधर्मत:। द्विगुणन्दण्ड मास्थाय तत्कार्य्यं पुनरुद्धरेदिति। तीरितं साक्षिलेख्यादिनि र्णीतमनुद्धृतदण्डम्। अनुशिष्टमुद्धृतदण्डं दण्डपर्य्यन्तमनीत मिति यावत्। यत्पुनर्मनुवचनम्॥

मीरितश्चानुशिष्टश्च यच्च क्वचन विद्यते। क्टतन्तद्धर्मतो ज्ञेयं न तत्भूयो निवर्त्तयेदिति तदर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याधर्मतोवृत्तत्वाशंकायां पुनर्द्विगुणदण्डप्रतिज्ञापूर्व्वकं व्यवहारम्प्रवर्त्तयेन्न पुनर्द्धर्मतोवृत्तत्वनिश्चयेपि राज्ञा लोभादिना प्रवर्त्तनीयइत्येवम्परम्। यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्य्यं निवर्त्तितन्तदपि सम्यक्परीक्षणेन धर्म्मे पथि स्थापनीयम्॥

न्यायापेतं यदन्येन राज्ञाज्ञानकृतम्भवेत्। तदप्यन्यायविहितं पुनर्न्याये निवेशयेदिति स्मरणात्। अन्यायाय गृहीतदण्डधनस्य गतिमाह॥ ३१०॥

राज्ञा न्यायेन योदण्डोगृहीतोवरुणायतम्।
निवेद्य दद्याद्विप्रेभ्यः स्वयन्त्रिंशद्गुणीकृतम्॥ ३११॥

अन्यायेन योदण्डोराज्ञा लोभादिना गृहीतस्त्रिंशद्गुणीकृतं वरुणायेदमिति सङ्कल्प्य ब्राह्मणेभ्यः स्वयन्दद्यात्॥ यस्माच्च दण्डरूपेण यावद्गृहीतमन्यायेन तावत्तस्मै प्रतिदेयमितरथा पहारदोषप्रसङ्गात्॥ अन्यायदण्डग्रहणे पूर्व्वस्वामिनः स्वत्वविच्छेदाभावात्। इति श्रीमत्पद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षराख्यायां याज्ञवल्क्यधर्म्मशास्त्रविवृतौ द्वितीयोध्यायः समाप्तः॥ ३११॥

———

अस्मिन्नध्याये प्रकरणानुक्रमणिका कथ्यते। आद्यस्व्यवहार मातृकाप्रकरणम्। १। भुक्तिलक्षणम् ।२। ऋणादानम्।३। निक्षेपप्रकरणम्।४। साक्षिलक्षणम्।५। लेख्यलक्षणम्।६। दिव्यस्वरूपलक्षणम्।७। दायविभागः।८। सीमाविवादः। ।९। स्वामिपालविवादः।१०। अस्वामिविक्रयः।११। दत्ताप्रदानिकम्।१२। क्रीतानुशयः।१३। अभ्युपेत्यशुश्रूषा।१४। संविद्व्यतिक्रमः।१५। वेतनादानम्।१६। द्यूतसमाह्वयाख्यम् ।१७। वाक्पारुष्यम्।१८। दण्डपारुष्यम्।१९। साहसम् ।२०। विक्रीयासम्प्रदानम् ।२१। सम्भूयसमुत्थानम् ।२२। स्तेयप्रकरणम्।२३। स्त्रीसंग्रहणम्।२४। प्रकीर्णकमिति।२५। पञ्चविंशतिप्रकरणानि॥ उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः। धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः॥ समाप्तमिदं मिताक्षराव्यवहारप्रकरणं॥

---